SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 141 ]

# ŚIVALĪLĀRṆAVA

OF

## ŚRĪ NĪLAKAṆṬHA DĪKṢITA

*FOREWORD BY*

**PROF. RAMMURTI SHARMA**

VICE-CHANCELLOR

*EDITED BY*

**DR. DADAN UPADHYAY**

Assistant Editor

Publication Institute

Sampurnanand Sanskrit University, Varanasi

**VARANASI**

**2001**

सरस्वतीभवन-ग्रन्थमाला
[ १४१ ]

महाकविश्रीनीलकण्ठदीक्षितप्रणीतः

# शिवलीलार्णवः

कुलपतेः प्रो. राममूर्तिशर्मणः प्रस्तावनया विभूषितः

सम्पादकः
**डॉ. ददन-उपाध्यायः**
सहायक-सम्पादकः, प्रकाशनसंस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी

वाराणस्याम्
२०५८ तमे वैक्रमाब्दे १९२३ तमे शकाब्दे २००१ तमे खैस्ताब्दे

*अनुसन्धान-प्रकाशन-पर्यवेक्षक: —*

**निदेशकः, अनुसन्धान-संस्थानस्य**

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

वाराणसी।

ISBN : 81-7270-056-3

❑

*प्रकाशक: —*

**डॉ. हरिश्चन्द्रमणित्रिपाठी**

***निदेशकः, प्रकाशन-संस्थानस्य***

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

वाराणसी-२२१००२

❑

*प्राप्ति-स्थानम्—*

**विक्रय-विभागः,**

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

वाराणसी-२२१००२

❑

**प्रथमं संस्करणम्** – ५०० प्रतिरूपाणि

**मूल्यम्** – २००.०० रूप्यकाणि

❑

*मुद्रक:—*

**श्रीजी कम्प्यूटर प्रिण्टर्स**

नाटी इमली, वाराणसी-२२१००१

# प्रस्तावना

इह **शिवलीलार्णव**नाम महाकाव्यं **श्रीनीलकण्ठदीक्षितेन** प्रज्ञावता प्रतिभाभासुरमनसा महाकविना प्रणीतं श्रीपरब्रह्मपरमेश्वरशिवस्य श्रवणमनननिदिध्यासनाख्यसंस्तवस्वरूपं पण्डित**श्रीददन-उपाध्यायेन** सम्पाद्यमानं विश्वविद्यालयस्यास्य प्रकाशन-संस्थानेन प्रकाशतामानीतमेतदर्थं मोमोदते मे चेतः। तत्र शब्दार्थोभयरूपं केवलं रमणीयार्थप्रतिपादक-शब्दरूपमित्यादिकाव्यलक्षणं तत्र तत्र काव्यशास्त्रेषु काव्यप्रकाशादिग्रन्थेषु विदितचरमेव विदुषाम्। पुरुषार्थचतुष्टयस्य धर्मादेः सरसतया सौकर्येण साधनभूतेषु कान्तासम्मितोपदेशात्मकशब्दार्थोभयरूपेषु काव्येषु चमत्कार एव सारः। स च चमत्कारः चित्तस्यालौकिकानन्दाकारपरिणामविशेषः। तादृशः अद्भुतानन्दाकारचित्तवृत्तिः लोकोत्तरवर्णनारूपकाव्यावगतविभावादिभिः प्रतिपाद्यः। आनन्दाङ्कुरकन्दरूपस्य रत्यादेः स्थायिभावस्य सूक्ष्मसंस्काररूपेण अत एवानास्वाद्यत्वेनावस्थितस्य रजस्तमोभ्यामावृत्तस्य बहुतरशृङ्गारादि-रसानुकूलवृत्तिप्रतिकूलवृत्तिभिरुपरुद्धस्य विभावादिभिरेव श्रव्यदृश्यभेदभिन्न-काव्यप्रतिबोधितैर्विभावनानुभावनव्यभिचरणरूपव्यापारैः तामसाद्यावरण-प्रतिबन्धनिवृत्तावास्वादयोग्यत्वं प्रतिपद्यते। तस्माद् रत्यादिस्थायिभाव एवोक्तहेतुभिः आस्वाद्यतामापन्नो रस उच्यते। स चालौकिकानन्दरूपः तादृशचित्तवृत्त्या तदापन्नतयानुभूयते साक्षात्क्रियते। तत्र स्वसंवेद्यस्य रसस्यास्वादकाले वृत्तेरास्वादविषयस्य प्रमातुश्च तिरोभावात् स्वप्रकाशता सिद्ध्यति।

स च रसो रसराजो नटराजो लीलासमुद्रः लीलास्वरूपः सर्वप्रपञ्चोपादानभूतो भगवान् रसिकेश्वरः साक्षात् शिव एव। **'रसो वै सः'**[१] इति श्रुतेः। **'रसं ह्येवायं लब्ध्वा आनन्दीभवति'**[२] इति श्रुतेश्च। रसं

---

१. तै.उ., २.७;  २. तै.उ., २.७।

तादृशं सच्चिदानन्दानन्तापरिच्छिन्नाद्वयनिर्विशेषरूपतादात्म्येन सम्प्राप्य जीवः प्रमाता अपि तत्स्वरूपानन्द एव भवति। यद्यपि लोके विभावादिजीवितावधिः रसः काव्यजन्यानन्दविशेषो नवधा भिन्न उच्यते, तथापि सोऽपि रसः आनन्दः परमार्थतः शिव एवाद्वैतः। प्रमातृप्रमेयत्वविभावादिजन्य-प्रमारूपोपाधिभेदभिन्न इवोपाधिजीवितावधिः प्रतीयते।

एवञ्च रसरूपस्य परब्रह्मणोऽपरिच्छिन्नानन्दस्वरूपस्य कथं नित्यशः परमार्थतोऽविच्छेदतो निर्भेदतः स्वात्माभिन्नतया साक्षात्कारः सकलतापोपशमः परमौषधिभूतः स्यादिति जिज्ञासायामन्यत उपायमलभमानेभ्योऽपौरुषेयादुष्ट-प्रबलप्रमाणभूतपरमोपकारकश्रुत्येकशरणेभ्यो भगवती श्रुतिरुपदिशति—**'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च'**[१]।

शिवः परमार्थभूतः सर्वोपाधिविवर्जितः, अत एवानवच्छिन्नानन्दो द्रष्टव्यः साक्षात्कर्तव्यः। द्रष्टव्यता तस्य श्रवणमनननिदिध्या-सनद्वारेति श्रुत्यावगम्यते। एतदर्थमेव महाकविना श्रीशिवनिष्ठेन श्रीनीलकण्ठेन महाविदुषा शिवलीलार्णवं नाम महाकाव्यं निरमायि। उक्तञ्च तेनैव—

**श्रोतव्यं निधिरस्ति कोऽपि निहितो हालास्य इत्यग्रतो**
**मन्तव्यं स निधिर्जगन्निधिरिति न्यायैरथोच्चावचैः।**
**धातव्यं हृदि मूललिङ्गमथ च श्रीसुन्दरेशाभिधं**
**द्रष्टव्यं शफरेक्षणासहचरं तत्त्वं ततः शाङ्करम्॥**

(शि.ली. २२।९५)

हालास्यः नीलकण्ठशिवः कोऽपि निधिरस्तीति **'हिरण्यनिधिं निक्षिप्तम्'** इति श्रुतेः। स च पुनः तत्त्वार्थप्रतिपादकतर्कैः विचाररूपैः मन्तव्यः, मनने कृते स एव निधिः जगन्निधिरिति विज्ञायते।

---

१. बृहदा. २।४।५, ४।५।६।

जगदाधारजगद्धेतुर्जगन्नियन्तेति निश्चीयते। अतो जगज्जन्मादिहेतुभूतं मूललिङ्गं कारणाधिपाधिपं शिवमेव ध्यातव्यम्। श्रीसुन्दरेशाख्यं दीर्घकालनैरन्तर्यसत्कारसेवितम्। ततः शिवं शङ्करं श्रीपार्वतीरूपशक्तिसहचरं तत्त्वं साक्षात्कर्त्तव्यम्। लीला नाम परमात्मनः लोकमङ्गलकरी क्रीडा स्वेच्छया प्रयुक्ता। लोकमङ्गलं च पुरुषार्थावाप्तिर्द्रष्टव्या।

परमपुरुषार्थस्य मोक्षस्यानन्दस्वरूपस्य प्रदाता शिवः। स च तारकमन्त्रं प्रदाय सायुज्यमुक्तिं प्रददाति। तच्चोक्तं महाकविना श्रीदीक्षितेन—

**कैवल्यदानाय कृतप्रतिज्ञौ काशीपतिः पाण्ड्यपतिर्युवां द्वौ।**
**शिष्यैकविश्रान्तममुष्य दानं सार्वत्रिकं तारकमेव शम्भो!॥**

(शि.ली. २२।५६)

तस्य परमार्थसाधनभूतस्य महाकविविरचितस्य शिवलीलार्णवस्य शिवस्वरूपस्य परमात्मनो मननादिरूपस्य महाकाव्यस्य अद्यावधि चाप्रकाशितस्य प्रकाशनाय तत्सर्गसारांशपुरोवाक्संशोधन-परिशिष्टादिद्वारा सम्पादनाय पण्डितप्रवराः **डॉ. ददन-उपाध्यायाः** प्रयतमानाः सन्ति। तेषां सत्प्रयत्नेन परिश्रमेण चायमद्भुतः शिवसंस्तवरूपो महाकाव्यग्रन्थः प्राकाश्यतां नीयत इति महान् अस्माकं प्रमोदप्रकर्षः। एतदर्थं विद्वद्वरान् धन्यवादैराशीर्वचोभिः शुभाशंसाभिश्च वर्धापनं प्रदाय भगवन्तं साम्बं लीलार्णवं श्रीविश्वनाथं डॉ.उपाध्यायस्य योगक्षेमार्थं प्रार्थये।

ग्रन्थस्यास्य सुमनोहरस्य प्रकाशकाः प्रकाशनसंस्थानस्य निदेशकाः सहृदयधुरीणाः विश्वविद्यालयसंस्कृतिसंस्कृतगौरववर्द्धनतत्पराः **डॉ.हरिश्चन्द्रमणित्रिपाठि**महोदयाः शतशः धन्यवादपुरस्सराशीर्वादववोभिः वर्धापनार्हाः। अन्येऽपि ईक्ष्यशोधनप्रवीणाः **डॉ.हरिवंशकुमारपाण्डेयाः** ईक्ष्यशोधकौ **श्री-अशोककुमारशुक्ल**-भाटियोपाह्व**श्री-अतुलकुमारौ,** प्रकाशनसहायकः **श्रीकन्हईसिंहकुशवाहा**-महोदयः, पाण्डुलिपि-सङ्ग्राहकसहायकः **श्री-ओमप्रकाशवर्मा,** प्रकाशन-संस्थानस्य डाटा-इन्ट्री-

आपरेटरपदे नियुक्तः **श्रीजितेन्द्रकुमारोऽथ** च **श्रीदिवाकरमिश्रः, श्रीरविशङ्करश्च** सम्यगाशीर्वचनैः सधन्यवादैः विभूष्यन्ते। मुद्रणकलाप्रवीणेभ्यः श्रीजीकम्प्यूटरप्रिण्टर्सनिदेशकेभ्यः **श्रीअनूपकुमार-नागरेभ्यो** भूयो धन्यवादान् व्याहरन्तः ग्रन्थमिमं परमया प्रसन्नतया पुनः साम्बं सान्नपूर्णमनाथनाथं श्रीविश्वनाथं सर्वेषामायुष्यमारोग्यं सौभाग्यं प्रार्थयमानाः शारदाञ्च भगवतीं दिव्यां प्रणमन्तः समुपहरामः।

**त्वदीयं वस्तु गोविन्द! तुभ्यमेव समर्पये।**

राममूर्तिशर्मा

**वाराणसी**
पुरुषोत्तममासीया शिवरात्रिः
२०५८ वि.सं.

**राममूर्तिशर्मा**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# पुरोवाक्

## काव्यस्योपादेयता

**अपारे काव्यसंसारे कविरेव प्रजापतिः ।**
**यथाऽसौ रोचते विश्वं तथेदं परिवर्तते ।।** (ध्वन्या., तृ.उ.,पृ. ५५१)

पुरुषार्थचतुष्टयस्य प्राप्तिरेव पुरुषस्य पुरुषार्थता। तस्मै शास्त्राध्ययन-योगसाधन-तपश्चरण-देवताराधन-तन्त्रमन्त्रोपासनादिकानि विविधानि साधनानि शास्त्रेषु प्रथितानि। तत्र वेदादिशास्त्रेभ्यो नीरसतया दुःखादेव परिणतबुद्धीनामेव चतुर्वर्गफलप्राप्तिर्जायते। परमानन्दसन्दोहजनकतया सुखादेव सुकुमारबुद्धीनामपि पुनः काव्यादेव तत्प्राप्तिर्भवति, नास्त्यत्र सन्देहलेशस्यावसरः। अत एव चतुर्दशभाषाविलासिनीभुजङ्गेन महापात्र-विश्वनाथेनोक्तं साहित्यदर्पणे—

**चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि ।**
**काव्यादेव ........................।।** (सा.द.१.२)

भामहस्तु काव्यात् पुरुषार्थचतुष्टयस्य प्राप्त्या सह कलासु वैलक्षण्यं कीर्तिं प्रीतिं च विन्दत इति स्वीकरोति। यथा—

**धर्मार्थकाममोक्षाणां वैलक्षण्यं कलासु च ।**
**करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ।।**

अपरञ्च कालिदासादीनामिव यशः, श्रीहर्षादेः धावकादीनामिव धनं मयूरादीनामिव कुष्ठादिमहारोगनिवृत्तिः काव्यश्रवणसमनन्तरमेव ब्रह्मानन्दसहोदरानन्दलाभः, कान्तासम्मितसदुपदेशप्राप्तिश्च भवति। यथा मम्मटाचार्येण काव्यप्रकाशे साधूक्तम्—

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।**

**सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ।।**

रुद्रटस्तु काव्यं समस्ताभिमतप्रदायकं मन्यते । यथा—

**अर्थमनर्थोपशमं शमसममथवा मतं यदेवास्य ।**

**स्वरचितरुचिरसुरस्तुतिरखिलं लभते तदेव कविः ।।**

(काव्याल० १.४)

राजनकः कुन्तकस्तु काव्यं पुरुषार्थचतुष्टयस्य प्राप्तेरधिकमानन्दप्रदं स्वीकरोति। यथा—

**चतुर्वर्गफलस्वादमप्यतिक्रम्य तद्विदाम् ।**

**काव्यामृतरसेनान्तश्चमत्कारो वितन्यते ।।** (वक्रोक्तिजीवितम्)

इदमेव कारणमस्ति यत् कष्टसाध्ययोगतपश्चर्यादिसाधनानि परित्यज्य काव्यसेवनेन मानवस्य चरमोद्देश्यस्य प्राप्त्यर्थं सहृदयजनानां काव्ये प्रवृत्तिर्भवति। आचार्येण भामहेनोद्घोषितम्—

**स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुज्यते ।**

**प्रथमालीढमधवः पिबन्ति कटुभेषजम् ।।** (काव्यालङ्कारे-५.३)

राजानकेन कुन्तकेनापि काव्येतरशास्त्रान् कटुकौषधं काव्यञ्चाविवेकरोगशमनीयं मधुरं भेषजं स्वीकुरुते। यथा—

**कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम् ।**

**आह्लाद्यमृतवत्काव्यमविवेकगदापहम् ।।** (वक्रोक्तिजीवितम्)

मानवजीवने सर्वं समभीप्सितं वस्तु प्राप्तुं शक्यते काव्यात्, अत एव कथितम्—

**न स शब्दो न तद्वाच्यं न सा विद्या न सा कला ।**

**जायते यन्न काव्याङ्गमहो भारो गुरुः कवेः ।।**

किमधिकमाचार्यैः काव्यं ब्रह्मरूपेण प्रतिपादितम्। यथा—

**यदेतद्वाङ्मयं विश्वमर्थमूर्त्या विवर्तते ।**

**सोऽस्मि काव्यपुमानम्ब पादौ वन्देय तावकौ ।।**

विष्णुपुराणे काव्यं शब्दमूर्तिधरस्य महात्मनो विष्णोरंशः स्वीकृतः। यथा—

**काव्यालापाश्च ये केचिद् गीतकान्यखिलानि च ।**

**शब्दमूर्तिधरस्यैते विष्णोरंशा महात्मनः ।।**

काव्यस्योपादेयताग्निपुराणेऽप्युक्तम्—

**नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ।**

**कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा ।।**इति।

'काव्यालापांश्च वर्जयेत्' इत्युक्तिस्तु निकृष्टाश्लीलकाव्यं प्रत्यस्ति न तूदात्तचरितप्रतिपादकानां काव्यानां कृते। तेषां वर्णनेन तु कलेः पापस्य नाशो भवति। तानि पुण्येन कीर्तनीयानि भवन्ति। यथोक्तम्—

**कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।**

**ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ।।**

अन्यच्च—

**पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः ।**

**पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्दनः ।।**

अतः काव्यानि सन्तसहृदयजनसेव्यानि भवन्ति। तत्रापि यथैकदेवोपासका देवद्वयोपासका बहुदेवोपासका जना रुचीनां वैचित्र्यादवलोक्यन्ते, तथैव केऽपि काव्यमेकमन्ये काव्यद्वयमितरे च बहुकाव्यं प्रति स्वकीयां श्रद्धामर्पयन्ति। एतादृशीं श्रद्धामेवोररीकृत्य केनापि कथितम्—

**मेघे माघे गतं वयः ।**

प्रतिपाद्यकाव्यस्य प्रणेतृणा महाकविना श्रीनीलकण्ठदीक्षितेनापि डिण्डिमघोषेनोद्घोष्यते—

**हालास्येशितुरीशितुर्यदि सखे! लीलासु शुश्रुषसे**

**तत्सर्वागमगुप्तमस्य यदि वा तत्त्वं विजिज्ञाससे ।**

**पारं वाथ दिदृक्षसे यदि परं काव्यागमस्रोतसां**

**तत्कर्णे कुरु नीलकण्ठमखिनो वाचं शिवैकाश्रयाम् ।।**

(शिवली. २२.९९)

काव्यमल्पपुण्यवान् कथमपि प्राप्तुं न शक्नोति, यतो हि जगन्मङ्गलकर्त्तुः परमेश्वरस्याङ्गभूतं काव्यम्। तद्यथा—

**सव्यं वपुः शब्दमयं पुरारेरर्थात्मकं दक्षिणमामनन्ति ।**

**अङ्गं जगन्मङ्गलमैश्वरं तदर्हन्ति काव्यं कथमल्पपुण्याः ।।**

(शिवली. १.१५)

**काव्यकारणता**

काव्यस्य कारणताविषये विद्वत्सु मतैक्यं नास्ति। रुद्रटवामन-पण्डितराजजगन्नाथादयः प्रतिभामेव काव्यस्य कारणं स्वीकुर्वन्ति। दण्डी-मम्मट-वाग्भटपीयूषवर्षादयस्तु प्रतिभा-व्युत्पत्त्यभ्यासांश्च काव्यं प्रति कारणं मन्यन्ते। राजशेखरस्तु भिन्नं मतमुपस्थापयति। सामान्यतयाचार्याणामेषां मतमत्रोपस्थाप्यते, येन विचारशीलाः पाठकाः समालोचनात्मकदृष्ट्या स्वकीयं मतं निश्चिन्वन्तु। काव्यकारणविषये दण्डिना प्रोक्तम्—

**नैसर्गिकी च प्रतिभा श्रुतं च बहुनिर्मलम् ।**

**अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः ।।**

अर्थात् स्वाभाविकी प्रतिभा, प्रचुरं दोषहीनञ्च शास्त्रश्रवणं, तेन व्युत्पत्तिः, परिपूर्णोऽभ्यासश्च, तेन पौनःपुन्येन काव्यकरणस्याभ्यासः। एते त्रयः काव्यसम्पत्तयः। पुनश्च ते कथयन्ति—यद्यपि पूर्ववासनागुणानुबन्धिप्रतिभा नैवास्ति तथापि शास्त्रश्रवणाभ्यासाभ्यां सेविता वाग्देवी सेवकानामुपरि कञ्चिदनुग्रहं करोति। यथा तैरुक्तम्—

**न विद्यते यद्यपि पूर्ववासनागुणानुबन्धिप्रतिभानमद्भुतम् ।**

**श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम् ।।**

वाग्देवतावतारो मम्मटाचार्योऽपि दण्डिनः कारणतावादमेव स्वीकरोति। तस्य वचनमस्ति—

**शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।**

**काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे ।।** (का. प्र. १.३)

कवित्वबीजरूपः संस्कारविशेषः शक्तिः, लोकशास्त्रकाव्याद्यवेक्षणान्निपुणता, काव्यज्ञशिक्षयाभ्यास इति एतत्त्रितयं तस्य काव्यस्य उद्भवे निर्म्माणे समुल्लासे च हेतुः। हेतुरित्यत्रैकवचनता "जात्याकृतिव्यक्तयः पदार्थः" इति गौतमसूत्रे पदार्थ इत्यत्रैकवचनता यथा त्रिष्वेव पदशक्यत्वं तथा हेतुरित्यत्रैकवचनेन दण्डचक्रचीवरादिन्यायेन परस्परसापेक्षतया हेतुत्वमिति लभ्यते, न तु तृणारणिमणिन्यायेन व्यस्तानामिति।

अस्मिन् प्रसङ्गे वाग्भटस्याभिप्रायमस्ति—प्रतिभा काव्यस्य कारणम्, व्युत्पत्तिर्भूषणम्, अभ्यासस्तु काव्यरचनायां प्रगतिं करोति। तस्य शब्देनैवावलोकयन्तु सुधयः।

**प्रतिभा कारणं तस्य व्युत्पत्तिस्तु विभूषणम् ।**

**भृशोत्पत्तिकृदभ्यास इत्यादि कविसङ्कथा ।।**

पीयूषवर्षः जयदेवस्तु पूर्वाचार्याणां मतमनुसरन् कथयति। यथा—

**प्रतिभैव श्रुताभ्याससहिता कवितां प्रति ।**

**हेतुर्मृदम्बुसम्बद्धा बीजमाला लतामिव ।।** (चन्द्रालोके १.६)

रुद्रटः केवलां शक्तिमेव काव्यस्य कारणं स्वीकरोति, सः शक्तिं विवेचयन् कथयति—

**मनसि सदा सुसमाधिनि विस्फुरणमनेकधाभिधेयस्य ।**

**अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः ।।**

सहजोत्पाद्या च सा द्विधा भवति, उत्पाद्या तु कथञ्चिद् व्युत्पत्त्या जन्यते परया।

वामनोऽपि केवलां प्रतिभामेव कारणं मन्यते। तस्य कथनमस्ति– 'कवित्वस्य बीजं प्रतिभानम्। यद् विना काव्यं न निष्पद्यते निष्पन्नं वा हास्यायतनं स्यात्'।

पण्डितराजः जगन्नाथः स्वकीयं मतमुपस्थापयन् कथयति—'तस्य (काव्यस्य) च कारणं कविगता केवला प्रतिभा। सा च काव्य-घटनानुकूलशब्दार्थोपस्थितिः। तस्याश्च हेतुः क्वचिद् देवतामहापुरुष-प्रसादादिजन्यमदृष्टम्, क्वचिच्च विलक्षणव्युत्पत्तिकाव्यकरणाभ्यासौ'। राजशेखरोऽपि काव्यमीमांसायां विषयेऽस्मिन् विस्तरेण स्वकीयं मतमुप-स्थापितवान्। स तु श्यामदेवस्य मतमुद्घाटयन् कथयति—'काव्यकर्मणि कवेः समाधिः परं व्याप्रियते' इति श्यामदेवः। मनस एकाग्रता समाधिः'। समाहितं चित्तमर्थान् पश्यति, उक्तञ्च—

**सारस्वतं किमपि तत्सुमहारहस्यं**
**यद्गोचरं च विदुषां निपुणैकसेव्यम्।**
**तत्सिद्धये परमयं परमोऽभ्युपायो**
**यच्चेतसो विदितवेद्यविधेः समाधिः।।**

आचार्यः मङ्गलः काव्यतत्त्वस्य सिद्धेः चरमोपायो विच्छेदेन शीलनात्मकोऽभ्यासः स्वीकरोति। स हि सर्वगामी सर्वत्र निरतिशयं कौशल-माधत्ते। समाधिरान्तरः प्रयत्नो वाह्यस्त्वभ्यासः। तावुभावपि शक्तिमुद्भावयतः। 'सा (शक्तिः) केवलं काव्ये हेतुः' इति यायावरीयः। विप्रसृतिश्च सा प्रतिभाव्युत्पत्तिभ्याम्। शक्तिकर्तृके हि प्रतिभा व्युत्पत्तिकर्मणी। शक्तस्य प्रतिभाति शक्तश्च व्युत्पद्यते। या शब्दग्राममर्थसार्थमलङ्कारतन्त्रमुक्तिमार्ग-मन्यदपि तथाविधमधिहृदयं प्रतिभासयति सा प्रतिभा। अप्रतिभस्य पदार्थसार्थः परोक्ष इव प्रतिभावतः पुनरपश्यतोऽपि प्रत्यक्ष इव। यतो मेधाविरुद्र-

कुमारदासादयो जात्यन्धाः कवयः श्रूयन्ते। केचन महाकवयोऽपि देशद्वीपान्तरकथापुरुषादिदर्शनेन तत्रत्यां व्यवहृतिं निबध्नन्ति स्म। अनेन प्रकारेण काव्यमीमांसायां काव्यकारणविषये बहुचर्चितवान् राजशेखरः। जिज्ञासवः सुधयः तत्रैवावलोकयन्तु।

**कवेः काव्यस्य च लक्षणम्**

'कवेः कर्म काव्यम्' इति व्युत्पत्त्या कविशब्दसिद्धिविषयिणी जिज्ञासा समुत्पद्यते। तत्र शब्दकल्पद्रुमे 'कु शब्दे' इति धातोः 'अच इ' (उणादि-सू. ५७८) इति सूत्रेण 'इ'प्रत्यये कृते कविशब्दस्य व्युत्पत्तिः साधिता। अमरकोशस्य टीकाकारेण भानुजीदीक्षितेन 'कवते श्लोकान् ग्रथते, वर्णयति वा कविः' इति कविशब्दस्य व्युत्पत्तिर्निर्दिष्टा। एकावलीकारेण विद्याधरेण 'कवयति' इति कविः, तस्य कर्म काव्यम्' इति कवेः काव्यस्य च व्युत्पत्तिः कथिता। ध्वन्यालोकस्य लोचनटीकाकारेण श्रीमदभिनवगुप्तपादाचार्येण 'कवनीयं काव्यम्' इति काव्यस्य निर्वचनं कृतम्। काव्यमीमांसायां श्रीमद्राजशेखरेण 'कवृ वर्णे' धातोः कविशब्दस्य सिद्धिः साधिता। तद्यथा—कविशब्दश्च 'कवृ वर्णे' इत्यस्य धातोः काव्यकर्मणि रूपम्। वाग्देवतावतारः श्रीमम्मटाचार्यः काव्यशब्दार्थमाह—काव्यं लोकोत्तरवर्णनानिपुणकविकर्म। तेन लोकविलक्षणा चमत्कारबोधजनिका या वर्णना मुखादेः कमलत्वादिरूपेण कथनादि तत्र निपुणस्य कवेरसाधारणतादृग्वर्णनात्मकं कर्म काव्यं भवति। कर्म च योजनं न तूच्चारणं मौनिपद्ये व्यभिचारात्। अनया रीत्या वस्त्वसाधारणवर्णयिता कविः, तस्य कर्म कृतिर्वा काव्यम्।

यद्यपि वैदिके लौकिके च साहित्ये कविशब्दस्य प्रयोगः विभिन्नेष्वर्थेषु दृश्यते। तद्यथा—

कविर्मनीषी परिभूः स्वयम्भूः। (शुक्लयजु० ४०.८)

इत्यत्र कविशब्दः परमेश्वराय प्रयुक्तः। भागवतमहापुराणे आदिकविः इति प्रयोगो ब्रह्मणः कृतेऽभवत्। 'विद्वान् विपश्चिद् दोषज्ञः ........... पण्डितः

कवि:' (अमर. २.७.५) इत्यत्र शुक्राचार्याय विदुषे च कविशब्दस्य प्रयोगो दृश्यते। 'किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिता:' (गी. ४.१६) इत्यत्र विदुषे कविशब्द: प्रयुक्त:, निर्दिष्टादर्थादतिरिक्तं कविशब्द: वाल्मीकिव्यासयो: कृते प्रयुक्तोऽभवत्। तत: स एव कविशब्द: कालिदास-भास-दण्डी-बाण-हर्षादीनां काव्यनिर्मातृणां कृते प्रचलितोऽभवत्।

कवे: कृतिरेव काव्यम्। तत्र कविकृति: शब्दरूपेणार्थरूपेण शब्दार्थोभयरूपेण वा अस्तीति जिज्ञासायां पूर्वाचार्याणां स्वप्रतिभया प्रसूतं काव्यलक्षणमत्र प्रस्तूयते। तत्र प्रथमं 'शब्द एव काव्यम्' इति मत्वा कृतानि चिरन्तनाचार्याणां काव्यलक्षणानि प्रदर्श्यन्ते। तत्राग्निपुराणे—सङ्क्षेपाद् वाक्यमिष्टार्थव्यवच्छिन्नां पदावली काव्यम्'। काव्यादर्शे दण्डिना—'शरीरं तावदिष्टार्थव्यवच्छिन्नां पदावली' इति काव्यलक्षणं कृतम्। काव्यदीपिकायां कान्तिचन्द्रेण च 'इष्टार्थव्यवच्छिन्ना पदावली' इति काव्यलक्षणमभिहितम्। शौद्धोदनिना अलङ्कारशेखरे तद्वृत्तिकारेण केशवमिश्रेण च 'काव्यं रसादिमद्वाक्यं श्रुतं सुखविशेषकृत्' इति। श्रीमता भोजदेवेनापि सरस्वतीकण्ठाभरणे—

**निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।**
**रसान्वितं कवि: कुर्वन् कीर्तिं प्रीतिं च विन्दति ।।**इति।

पीयूषवर्षेण जयदेवेन चन्द्रालोके—

**निर्दोषा लक्षणवती सरीतिगुणभूषिता ।**
**सालङ्काररसानेकवृत्तिर्वाक् काव्यनामभाक् ।।** इति।

'महापात्रेण विश्वनाथेनापि साहित्यदर्पणे—

वाक्यं रसात्मकं काव्यम्' इति काव्यलक्षणं प्रत्यपादि।

पण्डितराजेन जगन्नाथेन रसगङ्गाधरे—'रमणीयार्थप्रतिपादक: शब्द: काव्यम्' इत्येवंप्रकारेण काव्यलक्षणं कृतम्।

अथ ये च शब्दे चार्थे चोभयत्र काव्यत्वमभ्युपगच्छन्ति, तेषां विवरणं प्रदर्श्यते। तत्र रुद्रट: शब्दार्थौ काव्यं स्वीकरोति। काव्यालङ्कारे वामनेन 'काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयो: शब्दार्थयोर्वर्तते' इति कथितम्। विद्याधरेणैकावल्याम्—'शब्दार्थौ वपुरस्य शब्दार्थवपुस्तावत्काव्यम्' इति। विद्यानाथेन प्रतापरुद्रीये—

**गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ ।**
**गद्यपद्योभयमयं काव्यं काव्यविदो विदु: ।।** इति।

अच्युतरायेण साहित्यसारे—

**तत्र निर्दोषशब्दार्थगुणवत्त्वे सति स्फुटम् ।**
**गद्यादिबन्धरूपत्वं काव्यसामान्यलक्षणम् ।।** इति।

मम्मटेन काव्यप्रकाशे 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुन: क्वापि' इति। न्यायवागीशेनालङ्कारचन्द्रिकायाम्—

**गुणालङ्कारसंयुक्तौ शब्दार्थौ रसभावगौ ।**
**नित्यदोषविनिर्मुक्तौ काव्यमित्यभिधीयते ।।**

शब्दार्थयो: साहित्यं काव्यं मन्यमानानामाचार्याणां लक्षणमत्राभिधीयते। तत्र भामहोद्भटानन्दवर्धनाचार्या: 'शब्दार्थौ साहित्यं काव्यम्' इति स्वीकुर्वन्ति। कुन्तकेन वक्रोक्तिजीविते—

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनी ।**
**वन्द्ये व्यवस्थितौ काव्यं तद्विदाह्लादकारिणी ।।** इति।

वाग्भटेन—

**साधुशब्दार्थसन्दर्भगुणालङ्कारभूषित: ।**
**स्फुटरीतिरसोपेतं काव्यं कुर्वीत कीर्तये ।।** इति।

क्षेमेन्द्रेण कविकण्ठाभरणे—

**काव्यं विशिष्टशब्दार्थसाहित्यसदलङ्कृति: ।।** इति।

श्रीमता भोजदेवेन शृङ्गारप्रकाशे 'शब्दार्थयोः साहित्यं काव्यम्' इति स्वीकृतम्। आचार्यमम्मटस्यापि 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' इति काव्यलक्षणं संवदते। तत्र शब्दार्थयोः काव्यत्वप्रयोजकं चमत्कारत्वम्, तत्प्रयोजको गुणोऽलङ्कारो रसश्च। यद्वा गुणादेः चमत्कारातिशयाधायकत्वाद् रसालङ्कारावेव काव्यत्वप्राणभूतचमत्कारप्रयोजकौ। श्रीनीलकण्ठदीक्षितोऽपि 'शब्दार्थौ काव्यं' प्रति स्वकीयां स्वीकृतिमददात्। तद्यथा—

**शब्दार्थौ दोषनिर्मुक्तौ सालङ्कारौ गुणोत्तरौ ।**

**काव्यमातिष्ठमानेभ्यः कविभ्योऽयं कृताञ्जलिः ।।**

(शिवली. २०.६)

**काव्यस्य भेदाः**

दृश्यश्रव्यभेदेन काव्यं द्विविधं भवति। तत्र दृश्यमभिनेयं भवति। तद् दृश्यं काव्यं नटे रामादिस्वरूपारोपाद् रूपकमित्युच्यते। यथा विश्वनाथेन साहित्यदर्पणे प्रोक्तम्—

**दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् ।**

**दृश्यं तत्राभिनेयं तद्रूपारोपात्तु रूपकम् ।।** (सा.द. ६.१)

रूपकमिदं नाटकादिभेदेन दशधा भवति। रूपकमिव किञ्चिद्विशेषणविशिष्टमुपरूपकमपि चाष्टादशभेदविभक्तं भवति। श्रवणमात्रगोचरीभूतं काव्यं श्रव्यं कथ्यते। तत्तु गद्यपद्योभयात्मकभेदेन त्रिविधं भवति। तद्यथा साहित्यदर्पणे—

**श्रव्यं श्रोतव्यमात्रं तत्पद्यगद्यमयं द्विधा।** (सा.द. ६.३१३)

छन्दोबद्धपदं पद्यकाव्यं भवति। तत्तु सप्तविधं प्रोक्तम्—

१. मुक्तकम्, २. सन्दानितकम्, ३. कलापकम्, ४. कुलकम्, ५. युग्मकम्, ६. खण्डकाव्यम्, ७. महाकाव्यञ्चेति। तत्तु साहित्यदर्पणे प्रतिपादितम्—

**छन्दोबद्धपदं पद्यं तेन मुक्तेन मुक्तकम्।**
**द्वाभ्यां तु युग्मकं सन्दानितकं त्रिभिरिष्यते ।।**
**कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम्।।**

(सा.द.६.३१४-३१५)

काव्यस्यैकदेशानुसारि खण्डकाव्यं भवति, यथा— मेघदूतादिः।

पुनश्च गद्यकाव्यं कथाख्यायिकाभेदेन द्विधा विभजते। श्रीविश्वनाथो गद्यं मुक्तक-वृत्तगन्धि-उत्कलिकाप्राय-चूर्णकभेदेन चतुर्विधं स्वीकरोति। तद्यथा—

**वृत्तगन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ।**
**भवेदुत्कलिकाप्रायं चूर्णकं च चतुर्विधम् ।।**

(सा.द. ६.३३०-३३१)

गद्यपद्यमिश्रितं काव्यं चम्पूनाम्ना व्यवह्रियते। गद्यपद्यमयी राजस्तुतिर्विरुदनाम्नाभिधीयते। विविधाभिर्भाषाभिर्विनिर्मितं काव्यं करम्भकसंज्ञया ज्ञायते।

**महाकाव्यस्य लक्षणम्**

छन्दोबद्धपद्यमयं सर्गेण बद्धं महाकाव्यं भवति। तत्र धीरोदात्तगुणान्वितः सद्वंशः क्षत्रियः सुर एको नायको भवति, क्वचिदेकवंशभवाः कुलजा बहवोऽपि भूपा नायका भवन्ति महाकाव्ये। अस्य सुविस्तृतं लक्षणं साहित्यदर्पणे प्रपञ्चितम्। तद्यथा—

**सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः ।**
**सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः ।।**
**एकवंशभवा भूपाः कुलजा बहवोऽपि वा ।**
**शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते ।।**
**अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः ।**
**इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम् ।।**

चत्वारस्तस्य वर्गाः स्युस्तेष्वेकं च फलं भवेत् ।
आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा ।।
क्वचिन्निन्दा खलादीनां सतां च गुणकीर्त्तनम् ।।
एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः ।
नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह ।।
नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते ।
सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत् ।।
सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः ।
प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः ।।
संयोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः ।
रणप्रयाणोपयममन्त्रपुत्रोदयादयः ।।
वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह ।
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ।।
नामास्य सर्गोपादेयकथया सर्गनाम तु ।।

(सा.द. ६.३१५-३२५)

**महाकाव्यस्योद्भवो विकासश्च**

संस्कृतसाहित्यजगति महाकाव्यस्योद्भवः कदाप्रभृत्यभूदिति यद्यपि न पार्यते निश्चयेन वक्तुम्, तथापि महाकाव्यस्य प्रथमं स्रोतमृग्वेदे प्राप्तुं शक्यते। तत्र विद्यमाना मन्त्राः कविप्रतिभां प्रति सङ्केतयन्ति; किन्तु काव्यशैल्याः पूर्णो विकासो वैदिककाले नैव मन्तुं शक्यते। ब्राह्मणग्रन्थेषु पुराणकाले सुपर्णाध्यायेऽपि काव्यस्याभा दृष्टिपथमायाति; परन्तु संस्कृतसाहित्ये सर्वप्रथमं महाकाव्यमादिकवेर्वाल्मीके रचितं रामायणमेव। तेन वाल्मीकिर्हि लौकिकसंस्कृतसाहित्यस्यादिकविरादिकाव्यञ्च तस्य रामायणम्। अत एव केनापि कथितम्—

**धर्म्यं यशस्यमायुष्यं राज्ञश्च विजयावहम् ।**

**आदिकाव्यमिदं चार्षं पुरा वाल्मीकिना कृतम् ।।** इति।

अत्र हि सप्तकाण्डानि, प्रतिकाण्डञ्च सर्गेषु विभक्तम्। अत्र हि नायको धीरोदात्तगुणान्वितः सद्वंशक्षत्रियो रामः। अत्र हि वीरो मुख्यो रसः शृङ्गारादयश्चान्येऽङ्गानि। फलञ्चास्य धर्मः ।

यद्यपि महाभारतेऽपि काव्यात्मकत्वं विलसत्येव, तथापि न तथा तत्र काव्यलक्षणं घटते यथा रामायणे।

एतावेव संस्कृतसाहित्यकाव्यधाराया उद्‌गमस्त्रोतसी । ये भास-कालिदास-अश्वघोष-भारवि-माघ-श्रीहर्षादिविभिन्नधारायां विभज्य संस्कृतसाहित्यकाननं चिरकालादेव सिञ्चतः। रामायणस्य सरला स्वाभाविकी च शैली पूर्ववर्त्तिनः कालिदासादीन् महाकवीन् पूर्णतया स्वभासा चमत्करोति। परवर्तिनां कृते महाकाव्यस्यादर्शं प्रस्तौति। यद्यपि रामायणमहाभारतयोरनन्तरं कालिदासं यावत् कस्यापि कवेर्महाकाव्यस्य दर्शनं न भवति, तथापि महर्षिः पाणिनिः (२८००वि.पू.) 'पातालविजयम्' 'जाम्बवतीविजयम्' महाकाव्यद्वयं रचितवानित्युल्लेखः प्राप्यते। महर्षिः पतञ्जलिरपि (१२००वि.पू.) स्वकीये महाभाष्ये काव्यसाहित्येन पूर्णपरिचितः प्रतिभाति। एकतः 'भारत'-नाम्ना काव्येन स्वकीयं परिचयं प्रकटयति, तत्रैवान्यतः 'कंसवधम्' 'बलिबन्धम्' अभिधेययोर्नाटकयोर्निर्देशं करोति। कविकुलगुरोः कालिदासस्य साहित्यकाव्यधारा अजस्त्रं प्रवहति। अस्मिन्नेव क्रमे श्रीनीलकण्ठदीक्षितप्रणीतं 'शिवलीलार्णवं' नाम महाकाव्यं दृष्टिपथं परिपूतं करोति।

**श्रीनीलकण्ठदीक्षितस्तस्य शिवलीलार्णवः**

शिवलीलार्णवमहाकाव्यस्य रचयिता भरद्वाजगोत्रीयः श्रीनीलकण्ठ-दीक्षितोऽस्ति। महाकाव्यमिदं द्वाविंशतिसर्गात्मकम्। महाकाव्यस्यास्य

वर्ण्यविषयो मदुरैस्थितस्य हालास्यनाथस्याख्यानं विद्यते। यथा तेनैवोक्तम्—

**लीलां चतुष्षष्टिमिमां प्रणीतां हालास्यनेतुस्तरुणेन्दुमौलेः।**
**श्रीनीलकण्ठे मयि कर्णजाहमानीय मीनाक्षि! चिरं दयेथाः ।।**

(शिवली. २२.९६)

**नीलकण्ठदीक्षितस्य व्यक्तित्वम्**

श्रीनारायणदीक्षितस्यात्मजः श्रीनीलकण्ठदीक्षितः सप्तदशशताब्द्यां स्वजनुषा भारतभुवमलञ्चकार। अस्य मातुर्नाम भूमिदेवी आसीत्। अयं भारद्वाजगोत्रीयः कर्मनिष्ठः श्रोत्रियो याज्ञिको ब्राह्मणश्चासीत्। महानुभावोऽयं स्वकीयब्राह्मणत्वोपरि गर्वमनुभवति स्म। अस्य गुरुः श्रीवेङ्कटेश्वरः 'अय्यादीक्षितः' इत्यपरनामासीत्। स्वकीयाद् भ्रातृव्यादप्पयदीक्षिताद् व्याकरणं धर्मशास्त्रञ्चाधीतवान्। स्वयं गङ्गावतरणस्य पुष्पिकायां स्वपरिचयमुप-स्थापितवान्। यथा—श्रीमद्भरद्वाजकुलजलधिकौस्तुभ-श्रीनीलकण्ठमतप्रतिष्ठापनाचार्य-चतुरधिकशतप्रबन्धनिर्वाहकमहाव्रतवाजि-श्रीमदप्पयदीक्षितसौदर्यश्रीमदाच्चादीक्षितपौत्रेण नारायणदीक्षितात्मजेन श्रीनीलकण्ठदीक्षिते ....। स्वकीये महाकाव्ये तस्याप्पयदीक्षितस्य नाम सबहुमानं स्मृतवान्। यथा—

**कालेन शम्भुः किल तावतापि कलाश्चतुष्षष्टिमिताः प्रणीन्ये।**
**द्वासप्ततिः प्राप्य समाः प्रबन्धाञ्छतं व्यधादप्पयदीक्षितेन्द्रः ।।**

(शिवली. १.६)

मदुरैनगरस्य तिरुमलनायकादीनां राज्ञां सचिवपदे पञ्चत्रिंशद्वर्षं यावत् कार्यं कृतवान्। तत एकोनषष्ट्यधिकषोडशशततमे वर्षे सेवानिवृत्तः ताम्रपर्ण्यास्तटे पालामदुईग्रामे आश्रमं निर्माय जीवनयापनं कृतवान्। ग्रामोऽयं राज्ञः अग्रहाररूपेण प्राप्तः। अस्मिन् ग्रामे श्रीदीक्षितस्य समाधिस्थलमद्यापि विद्यमानं वर्तत इति श्रूयते। अयं परमशैवो याज्ञिक आसीत्। शैवागमसिद्धान्तप्रचारायैव काव्यमिदं प्रणीतम्।

**तस्य कृतित्वम्**

श्रीनीलकण्ठदीक्षितस्यानेके ग्रन्था: समुपलभ्यन्ते। इमे अवलोकनीया: सन्ति—

| | | |
|---|---|---|
| १. अघविवेक: | – | धर्मशास्त्रस्य |
| २. कैय्यटव्याख्या | – | व्याकरणस्य |
| ३. शिवतत्त्वरहस्यम् | – | दर्शनस्य |
| ४. शिवलीलार्णव: | – | द्वाविंशतिसर्गात्मकं महाकाव्यम्। |
| ५. गङ्गावतरणम् | – | अष्टसर्गात्मकं महाकाव्यम्। |
| ६. कलिविडम्बनम् | – | खण्डकाव्यम् |
| ७. सभारञ्जनम् | – | ,, |
| ८. शान्तिविलास: | – | ,, |
| ९. अन्यायदेशशतकम् | – | ,, |
| १०. वैराग्यशतकम् | – | ,, |
| ११. आनन्दसागरस्तव: | – | भक्तिकाव्यम् |
| १२. शिवोत्कर्षमञ्जरी | – | ,, |
| १३. चण्डीरहस्यम् | – | ,, |
| १४. रामायणसारसङ्ग्रह: | – | ,, |
| १५. रघुवीरस्तव: | – | भक्तिकाव्यम् |
| १६. नलचरितनाटकम् | – | दृश्यकाव्यम् |
| १७. नीलकण्ठविजयम् | – | चम्पूकाव्यम् |
| १८. मुकुन्दविलास: | – | (अप्रकाशितम्) |

ग्रन्थसरणिमवलोक्य ज्ञायते यदयं श्रीनीलकण्ठदीक्षित: सर्वशास्त्र-कोविदो लेखनकलानिपुणश्चासीत्। स्वकीयग्रन्थवैभवेन संस्कृतसाहित्य-वाङ्मयस्य श्रीवृद्धिं कृतवान्।

**शिवलीलार्णवः**

श्रीनीलकण्ठदीक्षितप्रणीतः शिवलीलार्णवो द्वाविंशतिसर्गात्मकं महाकाव्यमस्ति। शिवा च शिवश्च शिवौ, लीलाश्च लीलाश्च लीलाः, शिवयोः लीला अर्णव इव, शिवलीला एवार्णवो वा तमधिकृत्य कृतो ग्रन्थः शिवलीलार्णवः। यद्यपि शिवलीलाः समुद्र इवावगाह्यमानाः सन्ति, तथाप्यत्र काव्ये चतुष्षष्टिलीलानां वर्णनं वर्तते। यथा स्वयं कविनैवोक्तम्—

**लीलां चतुष्षष्टिमिमां प्रणीतां हालास्यनेतुस्तरुणेन्दुमौलेः ।**
**श्रीनीलकण्ठे मयि कर्णजाहमानीय मीनाक्षि! चिरं दयेथाः ।।**

(शिवली. २२.९६)

काव्यस्यास्याख्यानं स्कान्दस्यागस्त्यसंहितायाः गृहीतम्, तदेव कविवर्णनानैपुण्येन काव्यरूपेण प्रस्तौति महाकविः। तत्र शिवतत्त्वविषये कश्चिद् विचारः प्रस्तूयते। शेतेऽस्मिन् सर्वमिति शिवः, व्युत्पत्त्याऽनया शीङ्शयने धातोः वन्प्रत्यये कृते निपातनाद् ह्रस्वे जाते शिवशब्दः निष्पद्यते। यस्मिन् समस्तं प्रपञ्चं शेते, अवस्थितं भवति। यत्र समस्तं प्रपञ्चमुत्पद्यते, स्थीयते, लीयते च तत्तत्त्वं शिव इति। अनेन शिवशब्दः सर्वजगदधिष्ठानस्य वाचकोऽस्ति। शिव एव जगतो निमित्तोपादानकारणम्। संसारस्य निःश्रेयसः सम्पादनात् शङ्करः कथ्यते। स्वयं भूत-सिद्ध-नित्यानादिस्वरूपत्वात् शम्भुः, अविकारी-निश्चल-सर्वविक्रियाशून्यत्वात् स्थाणुः, समस्तस्य संसारस्य लयस्थानत्वात् शर्वः, मृडः, रुद्र इत्यभिधीयते। अयं महान् ईश्वरः, देवो वेति, महेश्वरः, महेशः महादेवो वास्ति। सम्पूर्णचराचरभूतस्य पतिः, पालकः, अधिष्ठाता, अतो भूतेशः, भूतपतिरयम्। समस्तानां पशूनां जीवानामधिपतिः आत्मा, तस्मात्पशुपतिः। अनेन प्रकारेण शिवस्यानन्तानि नामानि अनन्तान् गुणान् प्रकटयन्ति। तापत्रयविनाशकस्य त्रिशूलधारिणो भूतपतेर्भवानीपतेरष्टमूर्तेः शिवस्य महिमा अगमः, अगोचरः, अकथनीयश्च वर्तते। तस्य महिमानं गणयितुं वागधिष्ठातृदेवी शारदाऽपि नैव क्षमा। सुष्ठूक्तं पुष्पदन्ताचार्यैः शिवमहिम्नस्तोत्रे—

**असितगिरिसमं स्यात् कज्जलं सिन्धुपात्रे**
**सुरतरुवरशाखा लेखनी पत्रमुर्वी ।**
**लिखति यदि गृहीत्वा शारदा सर्वकालं**
**तदपि तव गुणानामीश पारं न याति ।।**

स एव शिवो देवानामप्यधीश्वरः, सर्वश्रेष्ठः सर्वपूज्यश्चास्ति। श्वेताश्वतरोपनिषदि प्रोक्तम्—

**तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ।**
**पतिं पतीनां परमं परस्ताद् विदाम देवं भुवनेशमीड्यम् ।।**

(श्वेता. ६.७)

अथर्वशिरस्युपनिषद्यपि कथितम्—

**'यत् सूक्ष्मं तद् वैद्युतं, यद् वैद्युतं तत्परं ब्रह्म, यत्परं ब्रह्म स एकः, य एकः स रुद्रः स ईशानः, य ईशानः स भगवान् महेश्वरः'।**

(अर्थवशि. ३)

सर्वागमसारभूतमव्याजकारुण्यामृताब्धिं शिवतत्त्वमेवैकमालम्बं त्रयाणां जगताम्। तदेवोक्तं शिवलीलार्णवे श्रीनीलकण्ठदीक्षितेन—

**आलम्बमेकं जगतां त्रयाणामव्याजकारुण्यसुधानिधानम् ।**
**तं तादृशं त्वामपहाय शम्भो! किं तावदन्यैरिह किम्पचानैः ।।**

(शिवली. २२.९२)

अतः शिवतत्त्वमेव श्रोतव्यं मन्तव्यं ध्यातव्यं द्रष्टव्यं वर्तते। यथोक्तं तत्रैव—

**श्रोतव्यं निधिरस्ति कोऽपि निहितो हालास्य इत्यग्रतो**
**मन्तव्यं स निधिर्जगन्निधिरिति न्यायैरथोच्चावचैः ।**
**ध्यातव्यं हृदि मूललिङ्गमथ च श्रीसुन्दरेशाभिधं**
**द्रष्टव्यं शफरेक्षणासहचरं तत्त्वं ततः शाङ्करम् ।।** (शिवली. २२.९५)

**लीलातत्त्वम्**

अथ लीलातत्त्वोपरि विदुषां दृष्टिराक्षिप्यते। 'लयनं ली:' इति व्युत्पत्त्या 'लीङ् श्लेषणे' (दि.आ.अ.) धातो: 'सम्पदादित्वात् क्विप्' (वा.३.३.१०८) इति क्विप्प्रत्यये कृते, लियं लातीति व्युत्पत्त्या 'ला आदाने' (अ.प.अ.) धातो: 'आतोऽनुपसर्गे क:' (पा. ३.२.३) इति कप्रत्यये कृते लीलाशब्दो निष्पद्यते, ''लेलायनं लीला' इति व्युत्पत्त्या 'लेला दीप्तौ' इति कण्ड्वादिधातो: 'षिद्भिदादिभ्योऽङ्' (पा. ३.३.१०४) इति अङ्, 'अप्रत्ययात्' (पा. ३.३.१०२) इति अप्रत्यये वा कृते लीलाशब्दो निष्पद्यते, तस्माद् वाग्वेषचेष्टितै: श्लिष्टा प्रियस्यानुकृतिर्लीला कथ्यते। यथोक्तं हैमे—

**लीला केलिविलासश्च शृङ्गारभावजा क्रिया।** (हैम. २.५२०)

अमरकोशेऽपि शृङ्गारभावजा क्रिया लीला कथिता, यथा तत्रोक्तम्—

**हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः।** (अमर.१.७.३२)

नाटकरत्नकोशेऽप्युक्तम्—

**लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् ।**
**मोट्टायितं कुट्टमितं विब्वोको ललितं तथा ।**
**विहृतं चेति मन्तव्या दश स्त्रीणां स्वभावजाः ।।**

साहित्यदर्पणेऽपि लीलाशब्दास्य व्याख्यानं कृतं श्रीविश्वनाथमहापात्रै:। तद्यथा—

**अङ्गैर्वेषैरलङ्कारैः प्रेमभिर्वचनैरपि ।**
**प्रीतिप्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः ।।** (सा.द. ३.१४०)

विश्वकोशेऽपि लीलाशब्द व्याख्यात:। यथा—

**लीलां विदुः केलिविलासखेलाशृङ्गारभावप्रभवक्रियासु।** इति।

(विश्व. १५२.४५)

सा लीला प्रकटाप्रकटभेदेन द्विधा भवति। यथोक्तं पद्मपुराणे—

**प्रकटाप्रकटा चेति लीला सेयं द्विधोच्यते।**

पुराणेषु भगवतः शिवस्यासंख्याः लीला वर्णिताः। तस्य लीलाः समुद्र इव मानवैरगाह्या विद्यन्ते। मानवाः स्वविवेकबुद्ध्या शिवस्य लीला वर्णयन्ति। श्रीनीलकण्ठदीक्षितोऽपि शिवस्य लीलामसंख्येयामगाह्यां च सिन्धुमिव मत्वा चतुष्षष्टिलीलानां वर्णनं कृतवान् काव्येऽस्मिन्। यथा तैरेवोक्तम्—

**लीलास्वनन्तास्वपि यस्य दृष्टा**
**लीला चतुष्षष्टिरियं पुराणे।** (शि. २२. ९१)

अतः परं श्रीनीलकण्ठदीक्षितप्रणीतस्य शिवलीलार्णवस्य कथसारसङ्क्षेपोऽत्र प्रस्तूयते।

## कथासारः

**प्रथमसर्गः**—वस्तुनिर्देशात्मकं मङ्गलमभिधाय साहित्यविद्यां प्रशशंस। वयं यान् शब्दान् आलपामः, यानर्थांश्चोल्लिखामः, तान् शब्दार्थान् विन्यासविशेषभव्यैः कवयो जगन्ति सम्मोह्यन्ते। अल्पपुण्याः काव्यं प्राप्तुं न शक्नुवन्ति। यतो हि जगन्मङ्गलकरमैश्वरं वपुः काव्यम्। ततः काव्यप्रशंसां बहुविधां कृतवान्। भाग्यवशात्कविताधिराज्यमधिरूढा धीराः शब्दचित्रमये काव्ये न रमन्ते। किमप्सरसां निवासे स्वर्गेऽपि गत्वा काणैव गवेषणीया भवति? ततः खलनिन्दां कुकविनिन्दां च प्रस्तौति। पुनः कविप्रशंसामाचरति।

**द्वितीयसर्गः**—क्षितेराभरणायमानः पाण्ड्यदेशो दक्षिणस्यां दिशि विराजते। तत्र ताम्रपर्णी नाम रत्नापगाऽस्ति, यां जनाः दक्षिणजाह्नवीति विदुः। ततः सुन्दरनाथलिङ्गमवर्णयत्। लिङ्गमेतत् कृष्णार्जुनौ परिपूज्य सिद्धीः प्राप्तवन्तावित्यवेत्य जना अद्यापि कस्तूरिकाभिर्घनसारैश्च लिङ्गं लिम्पन्ति। तीर्थमेतत् प्राप्य जनास्तीर्थान्तरस्य प्रीतिं त्यजन्ति।

**तृतीयसर्गः**—एकदा सुधर्मामधितिष्ठन् पुरन्दरो वैरिणं वृत्रं विजेतुमन्त्रयत्। तपश्चरन्तं वृत्रमहनदिन्द्रः, ततो वृत्रहत्या तमनुससार। तदा नहुष इन्द्रपदं प्राप्तवान्, सोऽपि अगस्त्यशापात् सर्पयोनिं प्राप्तवान्। एकदा सुराणां गुरुर्वृत्रहत्यापापभयात् सरसीरुहनालतन्तुलीनमिन्द्रं दृष्ट्वा प्रतिबोधयति स्म। अमर्त्यान् खेदयन् कियन्तं समयमस्मिन् सरसि स्थास्यसि, प्राकृतिके प्रलयेऽपि सम्यग् निष्कृतं विना ऐनस्त्वां न मुञ्चति। अतस्त्वं पाशुपतव्रतं चर, करुणावरुणालयो महेशस्तव कलुषं निवारयिष्यति। तदा नीपवनं प्राप्य तपश्चचार, तदा तस्य कलुषं विप्रचकर्ष। तदा शक्रस्यादेशेन विश्वकर्मा चन्द्रमौलेरतिसुन्दरमर्धमण्डपं महता मणिमण्डपेन सक्तं विश्वशुभाय विदधे। तत्र शिवस्य परिवारदेवतानां विविधान्यायतनानि निर्मितवान्। तत्रैव मीनाक्ष्या देव्या मन्दिरमपि निर्मायि। तत्र कनकाम्बुजिनीति नाम सरसीमपि निर्मितवान्। महेन्द्ररतिपावनैः कनकाम्बुजिन्याः सलिलैरतिसौरभैः कमलैः सुन्दरेशमीनाक्ष्यौ गुरूक्तरीत्या परिपूज्य प्रणामाञ्जलिभिः परितुष्टं चकार। एवं मीनाक्ष्या देव्याः प्रसादेन वृत्रहत्यापापेन परिमुच्य देवो महेन्द्रः स्वपुरीमधिष्ठितो बभूव।

**चतुर्थसर्गः**—अथ तस्मिन् वासवे निवृत्ते स्वर्गे कोऽपि अन्य इन्द्रत्वं प्राप। स एकदा स्वेच्छयाभ्रमातङ्गमारुह्य स्वर्गाद् बहिर्निर्जगाम। तदैव सर्वासां सिद्धीनां निधिर्दुर्वासा नाम सुलभकोपः ऋषिराकाशे समागच्छत। इन्द्रं सः शशाप। पुनः देवाः प्रणिपातैस्तं प्रशाम्यन्त। तदा प्रसन्नो दुर्वासा सुन्दरेशार्चनान्तं शापं बबन्ध। प्राप्तशापो महेन्द्रस्य गजोऽपि क्षुद्रदन्तिजन्म लेभे। पशूनां रक्षणात् क्षितौ सोऽद्भुतो गजपतिर्बभूव। सः सञ्चरन्नेकदा नीपकाननं प्राप। मुनेः शापं स्मृत्वा पुष्करिण्याः कमलैः जलैश्च शिवौ सोऽर्चयत्। मुक्तशापो गजः पृथ्वी मुदा बभ्राम। ततो गजतीर्थनाम्ना ख्याता सा स्थली। यस्मिन् सरसस्तीरे स लिङ्गं स्थापयित्वाभ्यपूजयत्, तल्लिङ्गमैरावतेश्वरनाम्ना ख्यातम्। तत्रैव स्वामिनामाङ्कितमपरं लिङ्गं पुरन्दरेश्वरनाम्ना स्थापयामास। तेन शापविमुक्तः पुरुहूतेनादृतः स्वं धाम जगाम।

ततः कदम्बविपिनात् प्राच्यां कल्याणनगरे कदाचिद् धनञ्जयो नामा कश्चिद् वैश्यो जज्ञे। सोऽर्जुनापरपर्यायोऽभवत्। स एकदा नीपवनस्य समीपमाजगाम। धनञ्जयो नामा वैश्यो देवदेवस्य दयया दिव्यं चक्षुरधारयत्। एकदा सः कनकाब्जिन्याः कमलैः शर्वाणीचन्द्रशेखरौ सुरैः साकमानर्च। ततः समीपवर्तिनीं पुरीं प्राप, यत्र द्वितीयो वासव इव कुलशेखरनामा पार्थिवः पृथ्वीं शशास। तस्मै राज्ञे स्वमद्भुतं सर्वं वृत्तं विज्ञापयामास। पुनः सबान्धवो राजा कुलशेखरस्तत्र जगाम। स कदम्बवनं प्राप्य साम्बमीशानं गणाधिपं च सम्प्रार्थ्य तत्रैव नगरस्य निर्माणार्थं शिल्पिनो न्ययुङ्क्त। परिखाप्राकारादिभिः सुशोभितं नगरमिदं निर्मितम्। अशरीरिण्या वाण्या महापुरीयं मधुरा इति नाम्ना ख्याता। तत्र सप्तार्णववेष्टितां पृथ्वीं राजा कुलशेखरो बुभुजे।

**पञ्चमसर्गः**—अथ कुलशेखरो नृप आराधितचन्द्रशेखरप्रसादात् कुलावतंसं मलयध्वजं सुतं लेभे। स मलयध्वजः पांशुकेलीष्वपि शङ्करालयान् प्रकल्पयन् व्यवहरत्। अथोपनीतो नृपात्मजो वेदान् अधिजगे पुरोधसः कुम्भसम्भवादगत्स्यात्। पितुः कुलशेखराद् महास्त्रैर्धनुर्वेदं स्वतश्च शिवयोरचञ्चलां भक्तिं प्राप। कुलशेखरो नृपोऽशेषविद्यानिधिमात्तयौवनं कुमारं मलयध्वजं काञ्चीपुरनृपस्यात्मजया कुलार्हया काञ्चनमालिकया दारक्रियया युयोज। सा नरेन्द्रसूनोर्गृहिणीषु वल्लभा बभूव। पूर्वसंस्कारवशाद् मनस्विनी काञ्चनमालिका सुशीलतां भृत्यजनेषु दयार्द्रतामीश्वरे भक्तिं च दधे। एकदा सुतवत्सलो नृपः कुलशेखरः स्वतो धर्मपथे स्थितमपि सुतं मलयध्वजं धर्मं शशास। ततः षडात्मना धृतं राज्यभारं तस्मै पुत्राय प्रददौ। स महीपतिः केवलैर्बाह्यैः करणैः सकलं स्वराज्यतन्त्रं प्रशशास। एकदा सन्तानप्राप्तीच्छया पुरोहितस्यागत्स्यस्याश्रमं काञ्चनमालिकया प्रियया जायया सह मलयध्वजो नृपो जगाम। तत्र मुनिरगत्स्यः चिराय गोपितं रहस्यमेकमुपदिदेश। इयं भवतः पत्नी चिराद् मीनलोचनां देवीमुपास्त। तदा सा चान्यदुर्लभं वरमेकं प्रपेदे यदहं जगज्जनन्या जननी भवेयमिति। तदा शिवयैव त्वमस्यै पतिः कल्पितः। अतस्त्वमश्वमेधशतेन यज। इत्थमाशिषं प्राप्य क्षितिपतिः शिवमश्वमेधेनाराधयत्।

**षष्ठसर्गः**—मलयध्वजेन राज्ञाश्वमेधीयतुरङ्गो व्यमुञ्चत। कविना वसन्तस्य विस्तृतं वर्णनं कृतम्। वर्षानन्तरमसिताचलं हिमालयञ्चाभिगम्य तुरङ्गः सन्निवृत्तः। तदा अश्वमेधकर्मणि गिरिशमाराद्धुं मुनिभिः क्षितीशः अदीक्षत। तस्मिन् यज्ञे कुम्भजन्मागस्त्यः अध्वर्युः समजनि, आश्वलायनेन होतृत्वं प्रतिगतम्, मुनीन्द्रो जैमिनिः औद्गात्रं समधृत। बहुविदरुन्धतीसहायो वसिष्ठो ब्रह्मा बभूव। अस्मिन् यज्ञे विविधशास्त्रचर्चाऽप्यभवत्। पुनः यज्ञविधिं विस्तृतमवर्णयत्। तस्मिन् यज्ञे चतुरर्णवीपरीता भूः दक्षिणारूपेण राजा ऋत्विग्भ्यः प्रददौ। रक्षायामनधिकृतैर्द्विजैर्वितीर्णां धरित्रीं द्विगुणधनैर्निष्क्रीय मलयध्वजनृपः स्वां सर्वां लक्ष्मीं भूयोऽपि द्विजकुलसाच्चकार। ततो मित्रावरुणसुतावगस्त्यवसिष्ठौ मिथो विमृश्याम्बाया अवतरणाय काञ्चित् पुत्रीयामिष्टिमुपचक्रमाते। आज्याहुत्यभिपतनप्रवर्धमानादग्नेस्तत्क्षणमेव कापि कन्योदियाय। सा बाला अम्बाम्बेत्यमृतरसं गिरा किरन्ती मञ्जीरक्वणितमनोहरं चरन्ती भूपालपत्न्याः पर्यङ्कमभजत्। तां बालां मुहुर्मुहुः पश्यन्ती मुखकमलं जिघ्रन्ती माता निवृतिं नाभजत। तदा धरणिपतिरपिताममृतमयीं कन्यामाददानः कैवल्यं तृणाय मेने। तदा मन्द्रघोषैका वाग् नभसि समुज्जजृम्भे यत् तटातकां नाम तवात्मजां यदा पतिर्भविष्यन्नवलोकते तदा तस्यास्तृतीयं कुचमण्डलमन्तर्नियतं निमग्नं भवेत्। अथ सुधारसकिरं गिरं श्रुत्वा सर्वधनदक्षिणमध्वरं निर्वर्त्त्य सदारो नृपतिः परदेवतां तां तत्पादयुग्मञ्चोपसञ्जगृहे। तदाखिलं जगद् जगदम्बाया मनुजकुलावतारेऽभूतपूर्वमभूत्।

**सप्तमसर्गः**—अथ तटातकाया बाललीलामवर्णयत्। ततः कलशभवादगस्त्यात् सकलां विद्यामग्रहीत्। तदनन्तरमस्याः कुमारिकायाः प्रत्येकमङ्गं यौवनेनालङ्कृतम्। तदा नृपस्य मनसि चिन्ताजायत यद् भुवि दिवि वास्याः कोऽपि समुचितः पतिर्न भासते। तस्मात् चन्द्रमौलेः शरणमगात्।

**अष्टमसर्गः**—जातुचित् पाण्ड्यकुमारी तटातका षड्भिर्दर्शनैरलभ्यं निजं दर्शनं प्रकृतीनामदात्। पुनः मातरं काञ्चनमालां सुमतिं सचिवं च रहसि

नीत्वा विजयाय गन्तुं निवेदयति। तदैव कुम्भभूर्महर्षि: स्वयमुपेत्य बहुविधा आशिषो विरचय्य मलयध्वजकन्यकां व्याजहार। तव जययात्रा चलतु तत्रैव त्वं राजभागग्रहणं परिणयं च साधयिष्यसि। अथ कृतमङ्गलरक्षा सा दिग्जयाय अग्रे बलं सम्प्रचाल्य निर्जगाम। दिग्जयाय चलितां तां देवीं निशम्य शतशो धरणीशा विविधानुपहारान् सम्प्रगृह्य शरणमर्थमानास्तस्या: समीपमाययु:।

**नवमसर्ग:**—अथ प्रातःकालस्य वर्णनं कृतम्। प्रात:काले सा नृपते: कुमारी पुन: विजयाय प्रतस्थे। तस्या: प्रस्थानसमये यावद् योजनमात्रं भेरीरवश्चलति तावत् ततो दशगुणं तस्या: प्रताप: चलित:, ततो दशगुणा तस्या: कीर्तिर्व्यचलत्, ततोऽपि दशगुणं तस्या वैरिणो विदुरे: चेलु:। एवं सा राजाधिराजतनया दिङ्मुखेषु कीर्तिं प्रतापं च विकिरन्ती अयासीत्। एवं सा मार्गरहितेष्वपि हिमाद्रे: शृङ्गेषु जगाम। पुन: हिमाद्रिशिखरादवतीर्य किम्पुरुषनाम्नि वर्षे विवेश। तत: केतुमालं वर्षं निनाय। ततो निजेन यशसा सह नीलं शैलं समवाप। तदनन्तरं समुद्रतटं प्राप। तदा समुद्र: समुपागत्य प्रार्थयामास तां कुमारीम्। पुन: जम्बुनदतटे जगाम।

**दशमसर्ग:**—अथ दिक्पतीन् विजेतुमुत्सुका राजकन्या तटातका महता स्यन्दनेन सैनिकै: सह दिवमुत्पपात। शक्रस्य ये शरा नमुचिजम्भभेदिन: वृत्रबलघातिनश्चासन्, ते किलार्धपथ एव सुमतिचापनिस्सृतै: सायकै-र्दारिता:। हे वासव! सुन्दरेशमभिषेक्तुमर्चितुं च स्वर्गवीं सुरतरूंश्च प्रहिणु इति तमुक्त्वा विसृज्य च तत: सा चलिता। एवं दश दिगीशान् विजित्य चन्द्रशेखरपुरीसमीपमागत्य सा सिंहनादमतनिष्ट। नादमेनमवकर्ण्य नन्दिना चुक्रुधे परं पुराभिदा पिप्रिये। ततो वीतबाहुचरणा विमस्तका: कुक्षिलग्नवदना स्मरद्विषो गणास्तटाकया सह युद्धाय निर्ययु:। युद्धे शङ्करं दृष्ट्वा तस्या: करात् सशरं धनु: स्रंसते स्म, शरदिन्दुसुन्दरं चन्दशेखर-मुपगूहितुं तस्या मनस्तत्वरे। तदा तस्या हृदये तृतीय: कुचो निर्ममज्ज। एवं तं दृष्ट्वा सा लज्जया नम्रमुखी बभूव। तदा प्रथमेशस्तस्या आनतं

मुखमुन्नमय्येदमवदत्—देवि! किं लज्जसे, त्वया युधि वयं विजिताः, तस्याः पाणिग्रहणाय स्वीकृतिं प्राप्य पुनराह चन्द्रार्धचूडामणिः—आसन्ने विधुवासरे मधुरापुरीमेतास्मि पाणिपीडनाय सज्जीभवेति आभाष्य स्वयमन्तर्दधे। पुनः सुमतिना मन्त्रिणा कथितं यद् अगस्त्यस्य वचस्तव जैतयात्रा करग्रहफला इति न विस्मर। एवं बोधिता सा मधुराभिमुखीं प्रतस्थे।

**एकादशसर्गः**—अथ सा विहायसा पुष्पकाश्रिता प्रतस्थे। तत्रतो गिरीन् सरितोऽरण्यानि विचित्रं विलोकयन् शुभे मुहूर्त्ते नगरं विवेश। तदा मातुः सदनं जगाम तटातका। माता विनम्रां सुतां परिरभ्य शिरस्युपाघ्राय चानने चुचुम्ब। पुनर्दिव्यां पार्थिवीमुपहारस्वरूपां चोपदां सुरद्रुमान् स्वर्गवीं च नृपालभामिनी जग्राह। विवाहावसरं परिज्ञाय पौरजनैः पुरमलङ्कृतम्, सुन्दरनाथलिङ्गतः मानुषं वपुरास्थितो महेश्वरो विनिर्गतः। पाण्ड्यदेवीप्रहितेन मन्त्रिणा निवेदिता-सन्नमुहूर्त्तमङ्गलो विवाहोचितवेषसुन्दरः प्रभुर्मधुरां प्रवेष्टुकामो विनिर्ययौ। अथ द्विरदाद् अवतीर्य पारिषदैः सुरैरपि अनुद्रुतो विरिञ्चिवैकुण्ठकरावलम्बनः महेश्वरो राज्ञो भवनं विवेश। तदा कुम्भभवो मुनिः सपर्यया सभाजयन् वरं महेश्वरं गृहं प्रवेशयामास। तदा रमा वरस्य पादं प्रक्षालयामास। पुनर्देवो विवाहवेदिकां विवेश। तदा मुनिभिः मङ्गल्यपाठं चक्रे।

**द्वादशसर्गः**—अथ रत्नमये आसने निषण्णमाद्यं युवानं महेश्वरं सर्वे वृद्धा मुनय आशीर्वचोभिरपुष्णन्। ततः सम्पूर्णा वैवाहिकक्रिया विधिवत् सम्पन्नाः। विवाहानन्तरं नृत्यादिकं समभवत्, ततो विभिन्नैर्भोज्यसामग्रीभि-र्वरयात्रिकास्तृप्तिमापुः। तदनन्तरं भोजनवेदिकायां वध्वा समं वाणीविरिञ्चौ कमलामुकुन्दौ शचीमहेन्द्रौ निषेदुः। वध्वा सह चन्द्रचूडोऽन्तिकस्थान् देवान् नर्मभिः आमोदयन्नभुङ्क्त। सो महेश्वरो भुक्तशेषं समन्त्रमेकं कवलं प्रथमं प्रियायै ददौ। इत्थं नर्मकथाभिर्भुक्तोत्थितः सुन्दरपाण्ड्यदेवो विश्रान्तिकृते वयस्यान् विसृज्य तटातकायाः सज्जीकृतं शय्यागृहं प्राप। ततोऽवशिष्टभोज्यानां भक्षणाय कुम्भोदर आगतवान्। तस्य तृप्त्यै गङ्गा वेगादागता, तस्मादियं नदी वेगवतीति नाम्ना भुवि ख्याता।

अथापरेद्युरगस्त्यमुख्यैः समस्तैः परमर्षिभिः पाण्ड्याधिराज्ये कलिताभिषेकः स महिष्या तया पृथ्वीं शशास।

**त्रयोदशसर्गः**—इत्थं पाण्ड्यराज्याभिषेकं प्राप्य सुन्दरः पाण्ड्यदेवः देव्या तटाकया सार्धं बिभ्रदेकातपत्रां पृथ्वीं रेमे। तेन चातुर्वर्ण्यं चातुराश्रम्यं चतुर्वर्गयोगं स्थापितं दृष्ट्वा तत्र धर्मश्चतुर्भिः पादैस्तस्थौ। एवं काले व्यतीते पत्नी अन्तर्वत्नी जाता। अथ शुभे लग्ने पाण्ड्यवंशस्य भूत्यै तस्या गर्भात् तारकारिः कुमारः प्रादुर्भूतः। उग्रप्रकृतित्वात् तस्योग्र इति नाम चकार। प्राप्तकाले भास्वद्वंश्यया कन्यया कान्तिमत्या तस्य विवाहोऽभवत्। ततो देवदेवः कुमारं पाण्ड्यराज्येऽभ्यषिञ्चत्। इत्थं भूमिः पाल्या इत्थं दृप्ता विजेयाः, इत्थं त्वया वर्तितव्यमिति उग्रं कुमारमादिश्य दम्पती मूललिङ्गे मीनाक्ष्यां च विवेशतुः। तेनोग्रेण शतेनाश्वमेधैः शम्भुमीडे, स भूमौ स्वर्गभोगानभुङ्क्त, तेन शक्रोऽसूयां चकार। तस्य निदेशेन दक्षिणाब्धिः ग्रामं मज्जयन् निर्जगाम। पुनः देवः सुन्दरेशो भूत्वा शान्तिं चकार। ततस्तेन सहाखण्डलस्य युद्धमभवत्।

**चतुर्दशसर्गः**—अथ मीनाक्ष्याः कुमारे मेदिनीं शासति जातु जलदुर्भिक्षतो जनाः पीडिताः। तदा सोमवारव्रतेन सः सोमसुन्दरमीश्वरं समाराधयाञ्चक्रे। तदाविर्भूय दयासिन्धुः पार्थिवमनुजग्राह। चन्द्रमौलेः प्रसादात् कनकं ववर्ष। अथ काले व्यतीते स चन्द्रमौलेरनुग्रहात् प्रेयस्यां कान्तिमत्यां यथार्थनामानं वीरपाण्ड्यं पुत्रमविन्दत। पुनः सकलां पृथ्वीं वीरपाण्ड्ये निवेश्य महीपतिः परमानन्दलक्षणं परं धाम प्रविवेश। अथ कालेन वीरपाण्ड्यो महीपतिस्तनयान् लेभे। पुनः वंशकरं पुत्रं देव्यां समुदपादयत्। जातु राजशार्दूलः शार्दूलेन निपातितः। ततः पञ्चवार्षिकं कुमारं राजमन्त्रिणोऽभ्यषिञ्चन्।

**पञ्चदशसर्गः**—एकदा महावर्षणेन प्रजाः समुद्विग्ना अभवन्। तदा जनैः समं पाण्ड्यसुतो नृपः चन्द्रशेखरस्य शरणं ययौ। अथ जातु हरः सिद्धवेषभृत् शिष्यैः सह मधुरापुरे समदृश्यत सोऽनेकधा जनान् विततार।

अथ राजा कदाचन सुन्दरेशस्य धाम्नि तं सिद्धं प्रैक्षत। तदानेकाः सिद्धीरदर्शयत्। अथ तस्य समक्षमेव तिरोदधे। तत विभोरनुग्रहात् तस्य नृपस्य राजशेखरो नाम तनयः अजनिष्ट। पुनः प्राप्ते समये भूभारं पुत्रे संस्थाप्य ऐश्वरं परं पदं प्रतिपेदे।

**षोडशसर्गः**—अथ राजशेखरे क्षितिं विभ्रति तपसा शम्भुं प्रसादयन् गौरीत्यभिविश्रुतां सुतामवाप। पञ्चवर्षया कन्यया तपसेऽभियाचितस्तातो राजशेखरस्तस्यै एकाक्षरमम्बिकामनुमदिक्षत्। सा कुमारिका जपयज्ञनिष्ठयाशेषसिद्धिदं मन्त्रमसाधयत्। भगवान् नटेश्वरस्तस्यै बालरूपमदर्शयत्। शङ्करभक्त इन्दुशेखरः शूलिनो वरेण कुलोत्तुङ्ग इति श्रुतं सुतं लेभे। ततः कुलोत्तुङ्गमहीपतिः क्षितिं दधौ। गुणेन शीलेन कुलेन चोन्नतं तमीक्षमाणाः क्षितिपास्तस्मै स्वस्वकुमारिकाः स्वतः समुपाहरन्। ततस्तस्यायुतमङ्गना बभूवुः। ततः स तासु कुमारकाणामयुतानि षट् लेभे। एवं कुलोत्तुङ्गमहीपतिः सुतैः समं शिवशासनद्विषः सर्वान् शशास। ततः कुलार्हविक्रमं कुलभूषणाभिधं कुमारं तपोभिरासाद्य तदर्पिताशेषधुरः पदमैन्दुशेखरं प्रपेदे। असौ कुलभूषणः कुलपतिं देवं शिवं सिषेवे।

**सप्तदशसर्गः**—अथ कुलभूषणो भूमिपतिः कुलदैवतस्य मधुराधिपतेः चरणं सदा परिचरन् चतुरर्णवीवलयितामवनिमशिषत्। सकलं गजवाजिगोमहिषधान्यधनं शिवाय न ममेति वदन् महता क्रतुना शिवमारराध। नृपतेः कोशगृहं रिक्तमवलोक्य शिवस्तथा अक्षयं धनं वितरति यथा स तद् व्ययितुं न पारयति। अथ कुलभूषणो नृपो मीनाक्षीशस्यार्चनया राजेन्द्र इति तनयं लभते स्म। सोऽपि मीनेक्षणाया देव्या भक्तिवादान् शृण्वन् सकलमपि महीचक्रमेकः शशास।

**अष्टादशसर्गः**—अथ शिवपादशेखरो नृपतिर्बभूव। सोऽपि तपोबलात् शिवभक्तं वरगुणं तनयं प्राप्य महीमण्डलमखिलं सुतेऽर्पयन् शफरेक्षणाचरणयोरलीयत। स कदाचित् ब्रह्महत्यया परवशो बभूव। ततो वाचाशरीरिण्या शुभे सह्यतनयातटे अर्जुनतरोरधस्तले अर्जुनेशं शिवमभिवन्द्य महीपतिस्तत्क्षणादेव निवृत्तकलुषो बभूव। सोऽयमुपवीणयन् नियमेन

प्रमथाधिनाथमसेवत। अथ हरस्तं परीक्षितुं वृष्टये जलदानचोदयत्; परन्तु सोऽनेकविधवर्षणेनापि गायनाद् विरतो न बभूव। तदा भगवान् शिवः प्रसन्नोऽभवत्। अथ राजराज इति विश्रुतं तनयमविन्दत। ततः सुते भुवो भारमखिलमवरोप्य फणीधरनियमस्य पालने तत्परोऽभूत्। एवं राजराजमहीपतेः क्षितिं परिरक्षतः सुगुण इत्यभिख्ययातिविश्रुतस्तनयोऽभवत्। अथ राजराजनृपतिः सकलागमज्ञं तारुण्ये विनयावनतं कुमारं पश्यन् प्रकृतिभिः सम्प्रार्थितो यौवराज्येऽभ्यषिञ्चत्।

**एकोनविंशसर्गः**—अथ पुत्रे वसुन्धरां वहति मृगयाकुतूहली वनं व्यचरत्। एकदा तस्य राज्ये प्रलयस्य स्थितिरुत्पन्ना प्रलयस्थितिं विस्तृतेनावर्णयत् कविः। ततश्चिराद् वंशशेखरो महीपतिः कश्चन द्रविडकुलेष्वजनि। अमितेन पराक्रमेण पार्थिवान् सुधासारकिरा गिरा कवीनपि जयन् नृपोऽयं सप्तसमुद्रमुद्रितां मधुरेश्वरार्पितां पृथ्वीं बभार।

**विंशसर्गः**—ततः कविपरम्परा काव्यस्वरूपं चावर्णयत्। सर्वे कवीन्द्राः चन्द्रचूडे भक्तिं चक्रुः। ततः पाण्ड्यवंशस्य चूडामणिः वंशशेखरोऽजायत। स कदाचित् मधौ चम्पककोरकैः शिवमपूजयत्। ततः कीरकवेरनेकविधं प्रसङ्गमद्भुतमवर्णयत्। एवं चम्पकपाण्ड्यदेवे दिवं गते तदन्वये कवीनां पार्थिवानां च राजा कुलेशो धरणीं बभार। तदा कविभिः सह शङ्करः कदम्बमूलमुत्सृज्य वेगवतीतटे श्रेष्ठं हालास्यं स्थानं प्राप्तवान्।

**एकविंशसर्गः**—कुलेशं महेशमाराधयतः कुलेशपाण्ड्यात् अरिमर्दनाख्यः कुमारोऽभवत्, यः पित्रा विधृतां भुवं बभार। तस्य वातपुरीशनामा सचिव आसीत्। स माहेश्वरमाश्रमं प्राप्य महेशमाराधयन् पार्थिवमप्यरक्षत्। अनेकधा पौराः सपाण्ड्याः शङ्करस्याद्भुतं लीलायितमालोक्य स्वस्वधियोऽनुरूपैस्तदानन्दवाष्पस्थगितैर्वचोभिः शिवमस्ताविषुः।

**द्वाविंशसर्गः**—अथारिमर्दनस्य कुले गुणैरुदारः कोऽपि कुब्जपाण्ड्यो नाम नृपो बभूव। पाण्ड्यवंशप्रभवोऽपि सः संसर्गदोषादार्हतानां दीक्षामवाप। किन्तु तस्य पत्नी मन्त्री चेन्दुचूडे शिवे परां भक्तिमूहतुः। एकदा नृपस्य

ज्वरतापः शिवप्रसादेन दूरीचकार कोऽपि ज्ञानपूर्णो नामा शिवभक्तः। तेन शिवदेशिकेन सह तदाष्टौ सहस्राणां तथागतानां शास्त्रार्थोऽभवत्। ततस्तेन ज्ञानपूर्णेन चार्वाकशिष्याः सौत्रान्तिका माध्यमिका जैनाश्च विजिताः। तदा कुब्जपाण्ड्यः शङ्करस्य शरणं प्रपन्नः। ततो गुरुर्ज्ञानपूर्णो नाडीसन्धान-मार्गेण तं शिवज्ञाननिधानं चकार। ततः सः शङ्करमभ्यर्थयन् पृथ्वीं प्रशशास। तदानीं शैवपदाधिरूढे प्रजेश्वरे सकलाः प्रजाः शिवव्रतस्थाः शिवमन्त्रसक्ताः शिवागमज्ञानसुधारसज्ञा बभूवुः। एकदा कस्याश्चिद् वैश्यपत्न्या विवाहसाक्ष्यकरणाय हालास्यनाथस्य मन्दिरस्येशानकोणे कदाप्यदृष्टं कूपं शमीवृक्षमनाथबन्धुं लिङ्गं दृष्ट्वा जना बिभयाम्बभूवुः। तदा सुरा अपि तत्र समागताः। तत्र देवा नैकैः श्लोकैः स्तुतिं चक्रुः। तस्यां स्तुतौ भगवतः साम्बशिवस्य चतुष्षष्टिलीलाया वर्णनमस्ति। यासां लीलानामाख्यानं पूर्वसर्गेषु वर्तते। इत्थं जनानां समस्तार्तिहरः कदम्बवनमाश्रिता मीनाक्ष्याः देव्याः साचिव्यतः त्रिलोकीमनुकम्पमान ईशः शङ्करो वर्तते। हालास्यनाथस्य चन्द्रमौलेः प्रणीतामिमां चतुष्षष्टिलीलां तुभ्यं समर्पये। हे मीनाक्षि देवि! मयि चिरं दयेथाः पुरारेः पदकमलार्पिते काव्येऽस्मिन् यद्यपि कविप्रणीता नवरसा न सन्ति, तथापि जगज्जनन्या मीनाक्ष्याः कारुण्यामृतरसकन्दली ध्रुवमास्ते। अन्ते महाकविः श्रीनीलकण्ठदीक्षितोऽद्भुतं शिवलीलार्णवकाव्यं शिवयोः चरणकमलेष्वर्पयति। प्रकारेणानेन शिवलीलार्णवः सम्पूर्णतामगात्।

**काव्यसमीक्षा**

श्रीमद्भरद्वाजकुलावतंसेन श्रीमदाच्चादीक्षितपौत्रेण नारायणदीक्षितात्मजेन श्रीनीलकण्ठदीक्षितेन विरचितेऽस्मिन् शिवलीलार्णवे महाकाव्ये द्वाविंशतिः सर्गाः शिवभक्तितत्पराणां मीनाक्षीसहितसुन्दरेश्वरसमुपासकानां पाण्ड्यवंशोद्भवानां विंशत्यधिकानां भूपानां वर्णनं विद्यते। अत्र शान्तरसः प्रधानरूपेण वर्णितः, अन्येषामपि सर्वेषां रसानां वर्णनमुपलभ्यते। स्कान्दस्यागस्त्यसंहितात वृत्तमुद्भावितम्। आदौ वस्तुनिर्देशात्मकं मङ्गलमाचरितम्। यथा—

**पूतं स्वतः पूततरं यद् गाङ्गं पयः शङ्करमौलिसङ्गात् ।**
**तत्पातु मातुः प्रणयापराधपादाहतैः पूततमं ततो नः ।।**

(शिवली० १.१)

खलनिन्दाप्रसङ्गे कविः कथयति यद् ब्रह्मा सृष्टिकाले दुर्बुद्धीनां खलानां वक्त्रं लशुनैर्निम्बसारैश्च पूरितवान्, तेनैव तेषां मुखे पूतिगन्धः तिक्तभावश्च विद्यते। यथा—

**आपूर्य वक्त्रं लशुनैर्विधाता किं निम्बसारैः कुधियामसिञ्चत् ।**
**न चेत् कथं वाचि ततः क्षरन्त्यां स पूतिगन्धः स च तिक्तभावः ।।**

(शिवलो० १.४३)

एकवृत्तमयैः पद्यैर्नातिस्वल्पा नातिदीर्घा द्वाविंशतिः सर्गाः काव्येऽत्र वर्तन्ते। विंशैकविंशौ सर्गौ नानावृत्तमयौ रचितौ। अस्य काव्यस्य वृत्तनिर्धारणमस्मत्कृते परिशिष्टेऽवलोकनीयम्। काव्येऽस्मिन् अष्टाविंशति-छन्दसां प्रयोगो विहितः। तत्र द्रुतविलम्बितस्य छटामवलोकयन्तु सुधयः—

**यदि मरुद् विजितं विजितं मनो यदि मनो विजितं विजितं जगत् ।**
**जितवतां मरुतं च तदर्वतां किमभिधेयमतस्त्रिजगज्जये ।।**

(शिवलो० २१.४१)

महाकविना युग्मक-कलापक-कुलक-चक्कलकानां पद्यानां प्रयोगो विहितः। कुलकस्य प्रयोगमवलोकयन्तु विज्ञाः। 'पञ्चभिः. कुलकं मतम्' इत्यनया रीत्या कुलकस्य प्रयोगः। यथा—

**चूडासङ्घटितसुवर्णपद्मदामव्यामिश्रग्रथितविलम्बिमौक्तिकौघा ।**
**प्रालम्बालकनिकरान्तराललक्ष्यव्यावल्गच्छफरविलोललोचनश्रीः ।।**
**कर्णाभ्यां मदनकराङ्गुलीयकाभं ताटङ्कं मणिखचितं विभूषयन्ती ।**
**अव्याजस्मितभणितान्तरालदृश्यप्रत्यग्रप्रसृमरदन्तकुन्तपङ्क्तिः ।।**
**वक्त्रेन्दुव्यतिषजदेणभीतिहेतोर्वैयाघ्रं नखमधिकन्धरं दधाना ।**
**त्रातुं त्रीनिव तनयान् विधीशविष्णुंस्त्रीन् वक्षोरुध्वलयान् समुद्वहन्ती ।।**

**अभ्यग्रोन्मिषदमरद्रुपल्लवाभे कुर्वाणा कुवलयकन्दुकं कराग्रे ।**
**सौवर्णाम्बरविलसन्नितम्बबिम्बव्यालम्बिस्फुटमणिमेखलाकलापा ।।**
**अम्बाम्बेत्यमृतरसं गिरा किरन्ती मञ्जीरक्वणितमनोहरं चरन्ती ।**
**सा बाला स्वयमभजन्नृपालपत्न्याः पर्यङ्कं श्रुतिशिखरैः कृताभ्यसूयम् ।।**
(शिवली० ६. ७२-७६)

सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासरप्रातर्मध्याह्नमृगयाशैलर्तुवननदी - सागरादीनां वर्णनं यत्र तत्र काव्येऽत्र समुपलभ्यते। नदीवर्णनप्रसङ्गे ताम्रपर्णीं नदीं वर्णयता महाकविना प्रोक्तं यत् ताम्रपर्णीं विहाय शङ्करस्य गङ्गां प्रति प्रीतिः कैतके सत्यपि अर्के प्रीतिरिव वर्तते। यथा—

**यां सर्वरत्नैकखनिं विहाय गङ्गामधात् केन गुणेन शम्भुः ।**
**का प्रीतिरर्के सति कैतकेऽपि न हीश्वरा पर्यनुयोज्यशीलाः ।।**
(शिवली० २.२३)

वसन्तर्तुं वर्णयन् कविः कथयति—

**अध्वर्युं मलयसमीरमन्यपुष्टं होतारं वनभुवि सामगं द्विरोकम् ।**
**ब्रह्माणं मधुमपि सादरं वृणाना आजह्रुर्मदनमष्टाध्वरं युवानः ।।**
(शिवली० ६.१६)

नगरवर्णनक्रमे कविश्चतुर्थे सर्गे मधुरां पुरीमवर्णयत्।
तत्र तस्या मधुराया नगर्य्या नामसार्थक्यं वर्णयति। यथा—

**दिव्यैः सुधामयैर्मेघैर्देवो जीमूतवाहनः ।**
**नगरं सेचयामास नवीनं त्रीण्यहानि सः ।।**
**मधुरोदकसंसिक्ता मधुरेयं महापुरी ।**
**इत्यश्रूयत तत्रत्यैर्दिव्या वागशरीरिणी ।।** (शिवली० १०५-१०६)

नूतननवशब्दप्रयोगे तु महाकविः श्रीनीलकण्ठो माघमपि अतिशेते। प्रतीयते शब्दपुनरुक्तिस्तु नगण्या वर्तते। अतः मम मनसि भासते, यत्—

**नवसर्गगते माघे रिक्ता तस्य सरस्वती ।**

**नवसर्गप्रयोगेऽपि जितानेन सरस्वती ।।**

एकस्य शब्दस्य बहुष्वर्थेषु चैकत्र प्रयोगो दृश्यतेऽस्मिन् काव्ये। पुष्करशब्दस्य चतुर्ष्वर्थेषु प्रयोगोऽवलोकयन्तु सहृदयाः—

**पुष्करैरभिषिच्येशौ पुष्करोपहृतैरयम् ।**

**पुष्करैरेव चानर्च पुष्करं गाहितुं पुनः ।।** (शिवली० ४.३५)

अत्र चतुर्णां पुष्करपदानां जलशुण्डादण्डपद्मव्योमानीति क्रमेणार्थाः सन्ति। जितशब्दस्य प्रयोगछटा सहृदयमनांसि जयति। अवलोकयन्तु तावत्—

**जिता त्वया यत् पृथिवी न तज्जितं जिताश्च यद्देवि! सुरा न तज्जितम् ।**

**अनेन यूना यदनन्यनिर्जितं जितं वधूजन्म तदूर्जितं जितम् ।।**

(शिवली० ११.४७)

अलङ्काराणां प्रयोगे कविः सर्वत्र दत्तावधानो दृश्यते। अस्मिन् काव्ये उपमारूपकोत्प्रेक्षाविरोधाभासव्यतिरेकदीपकादीनामलङ्काराणां रामणीयकं द्रष्टुं शक्यते।

तत्रोपमां पश्यन्तु—

**क्षुद्रद्वीपमिव चण्डमारुता शुष्कगुल्ममिव दानपावकः ।**

**ध्वान्तवृन्दमिव भास्करोदयस्तद्बलं नरबलं व्यनीनशत् ।।**

(शिवली० १०.८१)

उत्प्रेक्षाया छटापि प्रेक्षणीया वर्तते। तत्र हरो विवाहसमये काञ्चनमम्बरं धृतवान्। तस्य वर्णनमवलोकयन्तु—

**दिगम्बरः काञ्चनमम्बरं हरः बभारेति न विस्मयाय नः ।**

**तनुत्विषा तस्य दिशो दशापि यत् प्रतप्तकार्तस्वरभास्वरीकृता ।।**

(शिवली० ११.२८)

शङ्कराय जनानां कस्तूरिकाकर्पूरार्पणं प्रति कवेरुत्प्रेक्षावलोकनीयास्ति। यथा—

**कृष्णार्जुनाभ्यां परिपूज्य लिङ्गमासादिता सिद्धय इत्यवेत्य ।**
**कस्तूरिकाभिर्घनसारकैश्च लिम्पन्ति लोका खलु लिङ्गमेतत् ।।**

(शिवली० २.५४)

महाकविरयं कस्यापि वस्तुन आलङ्कारिकं चित्रणं कर्तुं सिद्धहस्तः प्रतिभाति। नारीनिर्माणविषये विचारोऽवलोकनीयः, तद्यथा—

**दुर्दान्तं मदनमवेक्ष्य निर्ममे किं वर्मैकं युवसु वधूमयं विधाता ।**
**यद्योगे मदनशराः प्रसूनमात्रं यत्त्यागे कुलिशदशाममी वहन्ति ।।**

(शिवली० ६.२८)

राज्ञः प्रतापस्य कीर्तेर्मनोहरं वर्णनमवलोकयन्तु—

**भेरीरवश्चलति योजनमेव यावत् तावत् ततो दशगुणं चलितः प्रतापः ।**
**कीर्तिस्ततो दशगुणं व्यचलत् ततोऽपि चेलुस्ततो दशगुणं विमता विदूरे ।।**

(शिवली० ९.१५)

कान्तासम्मितोपदेशाय काव्यं भवति; परन्तु कुलशेखरेण नृपेण पुत्रस्य मलयध्वजस्य शिक्षणमाध्यमेन लोकान् उपदिशति कविः। तद्यथा—

**धृतां चिराय त्रिजगद्धुरन्धरे धुरं धरायास्तनयेऽवरोपयन् ।**
**स्वतः स्थितं धर्मपथेऽपि तं पुनः शशास धर्मं सुतवत्सलो नृपः ।।**

(शिवलो० ५.१२)

उपंदेशोऽयं बाणस्य शुकनाशोपदेशं स्मारयति। एकस्मिन् स्थले कन्यामुपदिशति माता। यथा—

**शुश्रूषष्व प्रेयसः पादपद्मं क्षान्त्या धृत्या प्रेमवत्या च भक्त्या ।**
**लब्ध्वा पुत्रं राज्यभारेऽभिषिच्य द्रष्टास्मि त्वां स्वं पदं प्रत्युपेताम् ।।**

(शिवली. १३.४०)

अयं शकुन्तलां प्रति कण्वस्योपदेशमुखेन कालिदासमनुगमयति।

शैवदर्शनतत्त्वं महाकविः स्वप्रतिभाचातुर्येण काव्ये समुपस्थापयति, शिवभक्तिप्रवणत्वात् शान्तरसप्रधानमिदं काव्यम्; किन्तु रसानामन्येषामपि वर्णनमङ्गत्वेन कृतम्। युद्धवर्णनप्रसङ्गे वीररसस्यानुभूतिर्भवति। मध्ये मध्ये शृङ्गाररसस्य मार्दवमविस्मरणीयमस्ति। कुचद्वयस्य वर्णनप्रसङ्गे कविः कथयति। तद्यथा—

**परस्परस्पर्ध्यपि तत् कुचद्वयं विजेतुकामं किल मेरुमन्दरौ ।**
**तथा समेतं समये मिथः स्वयं यथोपलभ्येत न किञ्चिदन्तरम् ।।**
(शिवली० ११.६६)

नायिकायाः सौन्दर्यवर्णनप्रसङ्गे कवेः काव्यपाटवतावलोकनीया वर्तते। यथा—

**उपासितुं सा पतिमुत्पलप्रियं करे च कर्णे च निवेशितोत्पला ।**
**बभार भूयो नयनोत्पले ततः स्वयं बभूवोत्पलदामकोमला ।।**
(शिवली० ११.६९)

वैदर्भीरीतिप्रधानमिदं काव्यं प्रसादगुणगुम्फितं विराजते। काव्ये शास्त्रान्तरस्य पुटपाकोऽपि सहृदयान् शास्त्रविचारणायामुन्मुखीकरोति। वेदान्तस्यैकेश्वरवादस्य सिद्धान्तं महता कौशलनोपस्थापयति महाकविः श्रीदीक्षितः। यथा—

**एकं किल ब्रह्म यदद्वितीयं वक्तुं चतस्रः श्रुतयोऽपि नालम् ।**
**तादृग्विधान्येव भजन्ति तस्य ब्रह्माणि पञ्चावयवत्वमुद्राम् ।।**
(शिवली० २.४९)

पञ्चावयवत्वमुद्रा शङ्करस्य सद्योजातवामदेवतत्पुरुषाघोरेशानाख्य-मुखपञ्चकत्वं स्मारयति। षष्ठसर्गे ऋषीणां शास्त्रचर्चाप्रसङ्गे सर्वदर्शनानां मतमुपस्थापितम्। शिवागमप्रतिष्ठापनाचार्यो महाकविः श्रीनीलकण्ठदीक्षितः शिवैकनिष्ठतां प्रतिपादयति। यथा—

**शिवं यजाग्नौ शिवमर्च भास्करे शिवं स्मरान्तः शिवमेव कीर्त्तय ।**
**शिवं द्विजेषु प्रतिपूजयानिशं शिवैकनिष्ठो भव तात! सर्वथा ।।**
**शिवात् परं नास्ति यथा तथैव नः शिवोऽपि नान्यो मधुरेश्वरादिति ।**
**सुनिश्चितालम्बितसुन्दरेश्वरः सुखं महीं पालय शाश्वतीः समाः ।।**
(शिवली० ५.२८-२९)

काशीपतेर्विश्वेश्वरस्य तारकमन्त्रदानेन कैवल्यप्रदानस्य माहात्म्यं वर्णयति कविः। यथा—

**कैवल्यदानाय कृतप्रतिज्ञौ काशीपतिः पाण्ड्यपतिर्युवां द्वौ ।**
**शिष्यैकविश्रान्तममुष्य दानं सार्वत्रिकं तारकमेव शम्भोः! ।।**
(शिवली० २२.५६)

शिवस्य समुत्कृष्टदयालुतां वर्णयन् तस्य 'ॐ' इति नामसार्थक्यं प्रतिपादयति कविः। यथा—

**ये ये जना यद्यदिहार्थयन्ते तत्तन्निरस्तोपधि तेषु तेषु ।**
**ओमित्यलोभादनुजानतः किमोमित्यभिख्यैव तवेयमासीत् ।।**
(शिवली० २२.५८)

अनन्तलीलाकारिणः शिवस्य चतुष्षष्ठिलीलानां वर्णनमत्र विहितम्। अन्तिमे द्वाविंशे सर्गे तासां गणनमपि कृतं सुरस्तुतिव्याजेन।

**संस्करणस्यास्य वैशिष्ट्यम्**

यद्यपि ग्रन्थस्यास्य प्रकाशनमितः पूर्वमप्यभवत्; किन्तु मूलमात्रप्रकाशनेनास्य रहस्योद्घाटनं न भवति। पादटिप्पणीपरिशिष्टादिना विभूष्य विस्तृतया पुरोवाचा ग्रन्थस्यालोडनं कृतम्, तेन प्राप्तं रत्नमपि सहृदयानां समक्षमुपस्थापितमस्मिन् संस्करणे तथापि पूर्वसंस्करणस्याधमर्ण्यं विभ्रन् कृतज्ञतां व्याहरामि। ग्रन्थस्यान्ते प्रथमपरिशिष्टे सूक्तिरत्नानि

समुद्धृतानि। द्वितीये परिशिष्टे काव्ये प्रयुक्तानां प्रमुखशब्दरत्नानि प्रस्तुतानि, यस्यावलोकनेन महाकवेर्नव-नवशब्दप्रयोगचातुरी प्रकटिता भवति। तृतीये परिशिष्टे वृत्तनिर्धारणं प्रस्तूय काव्यस्यास्य बहुवृत्तताया ज्ञानं भवति, अथ च छन्दोनिर्धारणप्रक्रियायाः प्रयोजनं लक्षणादिकज्ञानपुरस्सरं काव्यकर्त्तुः परिचयादिकं प्राप्तुं शक्यते। पुरोवाग्भागे काव्यस्य कथासारः समीक्षा च यथामतिः प्रस्तूयते। तस्मात् पूर्वसंस्करणस्य विद्यमानत्वेऽपि संस्करणस्यास्य वैशिष्ट्यमक्षुण्णमिति विभावयामि। यथा कविना शब्दार्थप्रयोगे सुष्ठूक्तम्—

**यानेव शब्दान् वयमालपामो यानेव चार्थान् वयमुल्लिखामः ।**
**तैरेव विन्यासविशेषभव्यैः सम्मोहयन्ते कवयो जगन्ति ।।**

(शिवली० १.१३)

यद्यनेन किञ्चिदपि सहृदयानामुपकारो भविष्यति तदात्मानं धन्यं मन्ये।

**कृतज्ञताज्ञापनम्**

सर्वप्रथमं सान्नपूर्णस्य विश्वेश्वरस्याधमर्ण्यं बिभर्मि तेषां नगर्यां तल्लीलार्णवस्यावगाहनायावसरो प्राप्तः। अतः परं वेदान्तरसरसिकानां विद्वद्धौरेयाणां मनीषिवर्याणां मान्यमान्यानां कौलपत्यपदमलङ्कुर्वाणां **प्रो. राममूर्तिशर्म**महाशयानां पादपद्मकिञ्जल्कं मस्तकेनावहामि, यतो हि ते सम्पादनस्यावसरं प्रदाय मामनुगृह्णीतवन्तः। अस्मिन् क्रमे शास्त्रचिन्तन-लब्धचक्षुषां सहृदयमूर्धन्यानां सरलमृदुदयादानभरितान्तःकरणानां स्वभावत एवोपकारपरायणानां पौनःपुण्येन मामस्मिन् कर्मणि प्रेरयतां प्रकाशननिदेशकानां **डॉ. हरिश्चन्द्रमणित्रिपाठिवर्य्याणा**मुपकारं स्मारं स्मारं कृतज्ञतामावहामि प्रणमामि च। ततः सहकर्मकराणां समेषां प्रत्यक्षाप्रत्यक्षसहयोगं स्मृत्वा तेषां कृतज्ञतां स्वीकरोमि, अभिवादयामि च। तदनु श्रीजीकम्प्यूटर्ससञ्चालकानां **श्री-अनूपकुमारनागर**महोदयानां कृतज्ञतां

प्रकटयन्नाशीर्वचोभिः विज्ञापयामि यत्तैः महता श्रमेण सुस्पष्टं सुन्दरं मुद्रणमस्य ग्रन्थस्य विधाय लोकानामस्माकं च महोपकारः कृतः। अथ सरस्वतीभवनग्रन्थालयस्य शाखाभूते नवीनपुस्तकालये पटलसहायकपदे कार्यरतानां **श्रीबाबूलालशास्त्रिणा**मुपकारं ग्रन्थान्वेषणसाहाय्यं स्मृतिपथमानीय प्रणामाञ्जलिं विनिवेदयामि।

अन्ते चेमं ग्रन्थं सश्रद्धया सभक्त्या सान्नपूर्णस्यानाथनाथस्य विश्वनाथस्य श्रीचरणकमलेषु नतिपरम्परां समर्पयन् सर्वेभ्यो विद्वद्भ्यः प्रणामाञ्जलिं विधाय ग्रन्थलेखेषु त्रुटिशमनार्थं सर्वान् अभ्यर्थयमानो विरतो भवामि।

विदुषां वशंवदः

**ददन-उपाध्यायः**

सहायकसम्पादकः, प्रकाशनसंस्थाने

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

**वाराणसी**

गुरुपूर्णिमा

२०५८ वैक्रमाब्दः

# विषयानुक्रमणिका

●

।। श्रीः ।।

## महाकविश्रीनीलकण्ठदीक्षितप्रणीतः

# शिवलीलार्णवः

❁ ❁ ❁

## अथ प्रथमः सर्गः

पूतं स्वतः पूततरं ततो यद् गाङ्गं पयः शङ्करमौलिसङ्गात् ।
तत् पातु मातुः प्रणयापराधपादाहतैः पूततमं ततो नः ॥१॥

अशक्यमङ्गान्तरवद्विभक्तुमणुप्रमाणं करणं यदन्तः ।
सामान्यभूतं शिवयोस्तदेकं सानुग्रहं स्यान् मयि गर्भदासे ॥२॥

अन्विष्य खिन्नं निगमानशेषानमी न मीनं प्रथमं स्मरामः ।
अन्विष्यमाणं निगमैरशेषैरम्ब! स्तुमस्ते वयमक्षिमीनम् ॥३॥

स्तन्येन कश्चित्[१] कवयाम्बभूव ताम्बूलसारेण [२]परो जनन्याः ।
अहं ततोऽप्युन्नतिमाप्तुकामः सेवे ततोऽप्युन्नतमक्षिकोणम् ॥४॥

अर्धे तनोरद्रिसुतामयोऽस्मीत्यहंयुना किं फलमादियूना ।
गीर्वाणयोगीन्द्रमुपास्महे तं सर्वात्मना शैलसुतात्मको यः ॥५॥

कालेन शम्भुः किल तावतापि कलाश्चतुष्षष्टिमिताः प्रणिन्ये ।
द्वासप्ततिं प्राप्य समाः प्रबन्धाञ्छतं व्यधादप्पयदीक्षितेन्द्रः ॥६॥

[३]अनाहतोद्भूतमपास्तभेदमाद्यं शिवस्यौपयिकं विधातुः ।
नादाभिधं पारगमध्वनां तदनुत्तरं ज्योतिरनुस्मरामः ॥७॥

---

१. द्रमिलशिशुरिति सौन्दर्यलहर्यां व्यवहृतो ज्ञानसम्बन्धः ।

२. मूकमहाकविः;

३. अनाहतं हृत्स्थं द्वादशदलं पद्मम्।

साहित्यविद्याजयघण्टयैव संवेदयन्ते कवयो यशांसि ।
यथा यथास्यां [१]ध्वनिरुज्जिहीते तथा तथा सार्हति मूल्यभेदान् ॥८॥

यावत् कवेर्मार्दवमुक्तिबन्धे यावद् धियः श्रोतरि कोमलत्वम् ।
तावद् ध्वनौ तद्व्यतिभेदमूले तारत्वमालङ्कृतिका वदन्ति ॥९॥

अस्मिन् महत्यस्तमितान्यवेद्ये विसृत्वरे वीचितरङ्गरीत्या ।
काव्यध्वनौ जाग्रति देहभाजां कर्णं विशेयुः कथमन्यशब्दाः ॥१०॥

कीर्णानि घण्टापथ एव हन्त शब्दार्थरत्नानि गिरां सवित्र्या ।
अत्यादरादामृशतां कवीनां हृग्गोचरं कस्यचिदेव यान्ति ॥११॥

प्रायस्तिरोभूतमहाप्रकाशाः पाषाणखण्डेष्विव चन्द्रकान्ताः ।
शब्देषु शब्दा मिलिताश्चरन्ति भाग्योत्तरा एव तु जानते तान् ॥१२॥

यानेव शब्दान् वयमालपामो यानेव चार्थान् वयमुल्लिखामः ।
तैरेव विन्यासविशेषभव्यैः सम्मोहयन्ते कवयो जगन्ति ॥१३॥

गायन्ति वीणा अपि वेणवोऽपि जानन्ति बालाः पशवोऽपि चेदम् ।
काव्यानि कर्तुं च परीक्षितुं च द्वित्रा भवेयुर्न तु वा भवेयुः ॥१४॥

सव्यं वपुः शब्दमयं पुरारेरर्थात्मकं दक्षिणमामनन्ति ।
अङ्गं जगन्मङ्गलमैश्वरं तदर्हन्ति काव्यं कथमल्पपुण्याः ॥१५॥

स्तोतुं प्रवृत्ता श्रुतिरीश्वरं हि न शाब्दिकं प्राह न तार्किकं वा ।
ब्रूते तु तावत् कविरित्यभीक्ष्णं काष्ठा परा सा कविता ततो नः ॥१६॥

कर्णं गतं शुष्यति कर्ण एव सङ्गीतकं सैकतवारिरीत्या ।
आनन्दयत्यन्तरनुप्रविश्य सूक्तिः कवेरेव सुधासगन्धा ॥१७॥

पश्येयमेकस्य कवेः कृतिं चेत् सारस्वतं कोशमवैमि रिक्तम् ।
अन्तः प्रतिश्यायमवेक्षितश्चेत् कोणे प्रविष्ठा कविकोटिरेषा ॥१८॥

वक्रोक्तयो यत्र विभूषणानि वाक्यर्थबोधः परमप्रकर्षः ।
अर्थेषु बोध्येष्वभिधैव दोषः सा काचिदन्या सरणिः कवीनाम् ॥१९॥

---
१. ध्वनिः वाच्यातिशायि व्यङ्ग्यं, तद्वत् काव्यं वा, अथ च नादः।

सदर्थमात्रग्रहणात् प्रतीता सर्वज्ञता सापि शशाङ्कमौलेः ।
प्राप्ता विकासं प्रतिभा कवीनां व्याप्नोति यद्वेत्ति न तच्छिवोऽपि ॥२०॥

उल्लङ्घ्य तन्त्रान्तरसम्प्रदायानुत्प्रेक्षमाणा जगदन्यदन्यत् ।
कस्माद्बिभीमः कवयो भवामः काव्यज्ञदण्डाद्बिभिमस्तु कामम् ॥२१॥

तन्त्रान्तरेषु प्रतिपाद्यमानास्ते ते पदार्था ननु ते त एव ।
निर्वेदभीशोकजुगुप्सितान्यप्यायान्ति साहित्यपथे रसत्वम् ॥२२॥

अर्थावबोधेऽपि समे रसज्ञैरन्विष्यते सत्कविसूक्तिरेव ।
अपत्यलाभेऽपि समे विदग्धा रूपोत्तरामेव हि रोचयन्ते ॥२३॥

व्यामोहयन्ती विविधैर्वचोभिर्व्यावर्त्तयन्त्यन्यकलासु दृष्टिम् ।
कालं महान्तं क्षणवन्नयन्ती कान्तेव दक्षा कविता धिनोति ॥२४॥

चिन्तासु संसर्गविशेषलाभे सन्दर्भणे चाथ पदैः पदानाम् ।
[१]अर्थावबोधे च भवन् कवीनामानन्दभूमा वचसामसीमा ॥२५॥

अनायतप्राणमसंयताक्षमब्रह्मचर्यानशनादिखेदम् ।
चित्तं महेशे निभृतं विधातुं सिद्धः कवीनां कवितैव योगः[२] ॥२६॥

तिर्यङ्मनुष्यव्यतिरेकहेतुर्देव्या गिरामेव कटाक्षपातः ।
प्रज्ञाविशेषास्तु परे जानानां प्रायो दिशन्ति श्वश्रृगालसाम्यम् ॥२७॥

न कालभेदाद्रसवर्णभेदो न [१]जामिता वा न [२]ऋजीषभावः ।
सारस्वतं नाम फलं तदेतत् सदैकरूपं कृतिनो लभन्ते ॥२८॥

बाल्यं विदुः प्राकृतभाषितानि श्रुतिस्मृती वृद्धदशां वदन्ति ।
साहित्यमेकन्तु गिरां सवित्र्यास्तारुण्यमुद्राढमुशन्त्यभिज्ञाः ॥२९॥

क्वार्थाः क्व शब्दाः क्व रसाः क्व भावाः क्व व्यङ्ग्यभेदाः क्व च वाक्यरीतिः ।
कियत्सु दृष्टिः कविना न देया किमस्ति राज्ञामियतीह चिन्ता ॥३०॥

---

१. पुनर्विमर्शे इति खपुस्तके पाठः; २. योगः चित्तवृत्तिनिरोधः।
३. जामिता यातयामता; ४. ऋजीषं हृतसारोंऽशः।

आवर्णशक्तिग्रहमापवर्गं दुःखैकरूपा विरचय्य विद्याः ।
विश्रान्तिहेतोः कवितां जनानां वेधाः सदानन्दमयीं किमाधात् ॥३१॥
सिद्धं पदं सिद्धतरस्तदर्थः साध्या पदानां परमानुपूर्वी ।
तन्मात्रसारे कवितापदेऽस्मिन् कियद्विधात्रा कृतमुच्चनीचम् ॥३२॥
तान्येव शास्त्राणि त एव शब्दास्त एव चार्था गुरवस्त एव ।
इयान् विशेषः कवितापथेऽस्मिन् देव्या गिरां दृक्परिवर्त्तभेदः ॥३३॥
पदानि भव्यान्यपि काव्यरीतिमस्थानदत्तानि न शोभयन्ते ।
नासाग्रलग्नेन भवन्मुखश्रीस्ताटङ्कबिम्बेन किमङ्गनायाः[१] ॥३४॥
साहित्यविद्यां पदमेकमेव सर्वानवद्यामपि हन्ति दुस्स्थम् ।
दन्तावलिं मौक्तिकदामरम्यां दंष्ट्रेव वक्त्राद् बहिरुल्लसन्ती ॥३५॥
अन्योन्यसंसर्गविशेषरम्याप्यलङ्कृतिः प्रत्युत शोचनीया ।
निर्व्यङ्ग्यसारे कविसूक्तिबन्धे निष्क्रान्तजीवे वपुषीव दत्ता ॥३६॥
विद्वत्प्रियं व्यङ्ग्यपथं व्यतीत्य शब्दार्थचित्रेषु कलेर्विलासात् ।
प्राप्तोऽनुरागो निगमानुपेक्ष्य भाषाप्रबन्धेष्विव पामराणाम् ॥३७॥
कृते युगे व्यञ्जनयावतीर्णं त्रेतायुगे सैव गुणीबभूव ।
आसीत् तृतीये तु युगेऽर्थचित्रं युगे तुरीये यमकप्रपञ्चः ॥३८॥
दिष्ट्याधिरूढाः कविताधिराज्यं धीरा रमन्ते न हि शब्दचित्रे ।
स्वर्गेऽपि गत्वाप्सरसां निवासे काणैव किं कापि गवेषणीया ॥३९॥
मत्वा पदग्रन्थनमेव काव्यं मन्दाः स्वयं तावति चेष्टमानाः ।
मज्जन्ति बाला इव पाणिपादप्रस्पन्दमात्रं प्लवनं विदन्तः ॥४०॥
कालाद् बहोः कान्यपि दुष्पदानि लब्धानि मन्दः परितो विकीर्य ।
छिद्राणि लोष्टैरथ पांसुभिश्च सम्पूरयन् विस्मयते विलज्जः ॥४१॥
अद्यैकमेकं कुधियः परेद्युरन्येद्युरेकं च पदं निबध्य ।
शुक्तं क्वचित्पर्युषितं क्वचिच्च कोष्णं क्वचिच्चारचयन्ति पद्यम् ॥४२॥

---
१. 'कथं तरुण्या' इति खपुस्तके पाठः।

आपूर्य वक्त्रं लशुनैर्विधाता किं निम्बसारैः कुधियामसिञ्चत् ।
न चेत् कथं वाचि ततः क्षरन्त्यां स पूतिगन्धः स च तिक्तभावः ॥४३॥

लभेय निन्दामपि सत्कवीनां सव्यङ्ग्यसौरभ्यरसैर्वचोभिः ।
न तु प्रशंसामपि दुष्कवीनां दुर्गन्धिभिर्वीतरसैरमीभिः ॥४४॥

विवक्षितार्थप्रतिपादकं ये विन्यासभेदं न विदुः पदानाम् ।
दुःखावहोऽर्थः स्फुरितोऽपि तेषां दौर्भाग्यभाजामिव पुत्रलाभः ॥४५॥

दुर्मेधसः शुष्कतरां कठोरां दुर्गन्धसान्द्रां गिरमुद्गिरन्तः ।
कालं चिरं [१]हन्त कथं व्यथन्ते श्रोतुर्दशातस्स कियत्तमोंऽशः ॥४६॥

शृण्वन्तु ते दुष्कवितां परेषां श्रोत्रेषु तप्तं जतु यैर्निषिक्तम् ।
शब्दार्थयोर्दुष्कविवक्त्रभाजोः किं दुष्कृतं स्यादवधारयन्तु ॥४७॥

श्राम्यन्ति यावत् कवयः परेऽपि श्राम्यन्ति तावच्च ततोऽधिकं च ।
गर्भोद्भवादिः प्रसवावसानः क्लेशो हि दुष्पुत्रसुवां च तुल्यः ॥४८॥

दाक्षिण्यहानिर्जगतां विधातुर्देव्या गिरां दुर्मरणस्य योगः ।
पापं जनस्येति च सर्वमेतत् समाहृतं दुष्कवितानिदानम् ॥४९॥

आब्रह्मवातादघशोधनानि स्मरन्ति ये ते परमर्षयोऽपि ।
यावत्तदात्मान्वयिताधियैव न सस्मरुर्दुष्कवितासु शुद्धिम् ॥५०॥

स्वोक्तिं मुषित्वा पुरतः पठन्तं स्वस्यैव पश्यन् कविसाहसाङ्कम् ।
प्राज्ञो जनः किं प्रतिपद्यतां तमाहन्तु वा स्वोदरमा[२]हतां वा ॥५१॥

निन्दन्तु वाचं मधुरां कवीनां नन्दन्तु च स्वां गिरमेव मूर्खाः ।
नाद्यां स्वरीत्या रसयन्तु जातु नान्त्यां पठन्तु स्वपतोऽपि पार्श्वे ॥५२॥

हिंसा पशूनां क्रतुमध्यलग्ना स्वर्गे यथान्ते क्षणदुःखहेतुः ।
किञ्चिच्छुभं पातकमध्यलग्नं तथा मुदे स्यादपि दुष्कवीनाम् ॥५३॥

---

१. हन्तेति शोके! दुष्कवयो दुष्काव्यनिर्माणार्थं यद्व्यथन्ते तच्छोचनीयमित्यर्थः। तामिमां निर्मातृणां व्यथनदुरवस्थां श्रोतुः श्रवणव्यथादुरवस्था दूरमतिशेत इत्याह—श्रोतुर्दशात इत्यादि।

२. 'स्वाङ्गकर्मकाच्च' इति वचनात् तङ्।

प्राचेतसव्यासमुखाः कवीन्द्राः प्राञ्चेऽपि किं दुष्कविभिर्विरक्ताः ।
काव्यानि कर्त्तुं शतशः क्षमास्ते कथं न चेदासत काकबन्ध्याः[१] ॥५४॥

स्थूलाभिरभ्युल्लिखितानि धीभिः स्थूलानि मन्ये कुकवेर्वचांसि ।
कथं न चेत् कर्णपुटं प्रवेष्टुमेतानि यत्नादपि नोत्सहन्ते ॥५५॥

वाचं हतो यद्यपि ते तथापि न मूकता दुष्कवितैव दोषः ।
आद्या यदेकस्य विषादहेतुः प्राणोपरोधाय परा बहुनाम् ॥५६॥

वाचां विपञ्चीमिव [२]वादयन्ति कर्णामृतेन ध्वनिना कवीन्द्राः ।
मूर्खाः स्वमेधामुसलप्रहारैर्विनाशयन्त्येव विचेष्टमानाः ॥५७॥

शक्यं सुखं ग्रन्थयितुं प्रबन्धान् शक्यन्तु न श्रोतृजनानुरोधः ।
श्रान्ते सति क्वापि कवौ यदेष सर्वस्वनाशादिव खेदमेति ॥५८॥

अचुम्बितोल्लेखपदप्रवृत्तानसम्प्रदायेन कवीन् क्षिपन्ति ।
पथा प्रवृत्तान् प्रहतेन मूर्खाः पश्यन्त्यवज्ञामुकुलीकृताक्षाः ॥५९॥

रसं रसज्ञाः कलयन्ति वाचि परे पदार्थानपरे पदानि ।
वस्त्रं कुविन्दा[३] वणिजो विभूषां रूपं युवानश्च यथा युवत्याम् ॥६०॥

पाठप्रकारैः पदयोजनाभिस्तात्पर्यदुर्निश्चयतश्च मन्दैः ।
आयास्यमानां गिरमात्मनो ये कर्णे न कुर्वन्ति त एव धन्याः ॥६१॥

एको हि दोषः परकीयतैव पद्येषु सर्वेष्वपि दुर्जनानाम् ।
तस्मिन् पुरस्थेऽपि कियद्यतन्ते वृथैव ते दोषगवेषणाय ॥६२॥

आनन्दथुर्ब्रह्मविदां यदेकस्ते व्यङ्ग्यलाभेषु शतं कवीनाम् ।
एते सहस्त्रं पुनरर्बुदं वा परोक्तिदोषस्फुरणे खलानाम् ॥६३॥

प्राचीनपद्यभ्रमतः प्रवृत्ताः स्तोतुं खलः प्रेक्ष्य कविं पुरस्तात् ।
येनान्यथाकर्त्तुमिदं यतन्ते क्लेशेन तेषां हि स एव दण्डः ॥६४॥

---

१. एकग्रन्थनिर्माणमात्रचरितार्था इत्यर्थः।

२. 'वर्णयन्ति' इति खपुस्तके पाठः।

३. तन्तुवायः कुविन्दः स्यादित्यमरः। 'जुलाहा' इति ख्यातः जातिविशेषः।

दोषः क्वचित् कश्चिदिति प्रतीतः प्राचामलङ्कारविदां प्रवादः।
सर्वप्रबन्धानुगतस्तु मन्ये कर्त्तुः कवेर्जीवनमेव दोषः ॥६५॥
मुधैव वाक्येषु पदेष्वधीतं मुधैव दीर्घं कवितापथेऽपि।
आवश्यकं यत्किल पामराणामावर्जनं तन्न किमप्यधीतम् ॥६६॥
निसर्गतो निर्गुणमुक्तिगुम्फं समर्थयन्ते सगुणं बलाद्ये।
ते कञ्चुलीसन्नहनोन्नतेन लम्बस्तनेनापि मुदं लभन्ते ॥६७॥
पाण्डित्यलोभो यदि पामराणां कामं विहिंसन्तु कलास्त्रिषष्टिम्।
कस्तेऽपराधः कविते! गृहीतः किमस्ति ते किञ्चन पूर्ववैरम् ॥६८॥
वाचं कवीनामुपलालयन् यां भुङ्क्ते रसज्ञो युवतिं युवेव।
तामेव भुङ्क्ते ननु तार्किकोऽपि प्राणान् हरन् भूत इव प्रविष्टः ॥६९॥
अर्थेष्वलङ्कारविदः प्रमाणं शब्देषु नः शब्दविदो मुनीन्द्राः।
के तान्त्रिकाणां कवयो भवन्ति के वा कवीनामपि तान्त्रिकाः स्युः ॥७०॥
[१]घट्टोपविष्टानिव वाग्भिरर्थैः काव्यागमज्ञानुपसान्त्वयामः।
आप्लुत्य भल्लुकवदापतन्तः कथं नु जय्या इह गौतमीयाः ॥७१॥
अप्यन्तिकस्थैरविभावनीयः सूक्ष्मः प्रकृत्या मृदुसूक्तिजन्मा।
कुतर्कविद्याव्यसनोपजातैः कोलाहलैर्न ध्वनिरेष वेद्यः ॥७२॥
गुणान् न गृह्णन्तु खलास्ततः किं गृह्णन्तु दोषानपि वा ततः किम्।
अपि [२]व्यतिस्तामुभयं ततः किं गुणोऽपि दोषो यदि दुस्सहं तत् ॥७३॥
क्व ब्रह्मलोकः क्व गिरां सवित्री क्व भूमिभागाः क्व वयं वराकाः।
दिष्ट्योपलब्धामपि देवतां तां विक्रीणते वृत्तिकृते विमूढाः ॥७४॥
दुष्पण्डिताराधनदुःखशीलात् कष्टादमुष्मात् कविताधिकारात्।
वरं जगत्यामिह मूकभावो वरं च तिर्यक्तृणगुल्मभावः ॥७५॥
प्रायो जडा मत्सारिणश्च लोका दोषोत्तरं मृग्यगुणं वचो नः।
गुणैकलुब्धोऽपि जनः क्वचित् स्यादित्याशयैवायमियान् प्रयासः ॥७६॥

---

१. घट्टः शुल्कस्थानम्; २. 'कर्त्तरि कर्मव्यतीहारे' इति तङ्।

'वेदाहमेतं पुरुषं महान्त'मित्यामनन्तो निगमाः सगर्वम् ।
श्वानः कृता[1] येन स एव देवो वर्ण्यः कथं वाङ्मनसातिवर्ती ॥७७॥

शब्देषु चार्थेषु परं यतिष्ये तथा तथा मां गुरवो विनिन्युः।
चमत्कृतिं तत्र कथं विधास्ये न मत्कृतिर्यत् क्रमते तदंशे ॥७८॥

क्वाहं क्व काव्यं कविराजसाध्यं क्वाहं क्व शम्भुर्निगमैरगम्यः।
निश्शङ्कमेवंविदपि प्रवर्त्ते निर्लज्जते देवि! तव प्रसादात् ॥७९॥

दत्ते त्वया वाङ्मयरत्नकोशे विक्रीय भुक्तं किल भुक्तमेव ।
शिष्टं त्वदङ्घ्र्योः पुनरर्पयेयं दयस्व मीनाक्षि! पुरैव मह्यम् ॥८०॥

शब्दा यद्वदनं प्रपद्य मृदुतामाशासतेऽन्यादृशी-
मर्था यद्धिषणाप्रवाहपतनादिच्छन्ति जिज्ञास्यताम् ।
यत्कीर्त्तिस्पृहया शिवोऽपि निगमान् ग्रथ्नाति सर्गादिषु
प्राचस्तान् कवितापितामहपदारूढान् कवीन् प्रस्तुमः ॥८१॥

॥ इति महाकविश्रीनीलकण्ठदीक्षितप्रणीते शिवलीलार्णवे
प्रथमः सर्गः ॥१॥

---

१. किरातावस्थायामिति शेषः।

# अथ द्वितीयः सर्गः

अस्ति क्षितेराभरणायमानः पारेसमुद्रं स हि पाण्ड्यदेशः।
आशामगस्त्याध्युषितां गतोऽपि सर्वोत्तरो यो जगति प्रतीतः ॥१॥

आस्थाय वैराग्यमनुत्तमं यस्[1]त्रैलोक्यलक्ष्मीं न तृणाय मेने।
यदाधिपत्यस्पृहया स एव देवो दधे सुन्दरपाण्ड्यरूपम् ॥२॥

सुदुष्करं यत्प्रतिसर्गमेव पश्यन् मुनिः प्राग् विरराम सर्गात्।
न शुष्कया सान्त्वगिरा सुराणां किं गाधिसूनोरपि शान्तिरस्ति ॥३॥

मन्दानिलोऽसौ मलयानिलोऽसौ गन्धानिलोऽसाविति यं युवानः।
सम्भावयन्ते चलितैः शिरोभिः स कोऽपि यत्कोणभवः समीरः ॥४॥

आकारिता यत्र मखेषु विप्रैरालोकयन्तो विबुधाः समृद्धिम्।
युष्मान् यजामो वयमर्पयध्वे युष्मत्पदं चेदिति सान्त्वयन्ते ॥५॥

तपोवनेऽन्यत्र तपश्चरन्तो दिवं भजन्ते यदि युक्तमेतत्।
ततोऽधिके यत्र तपस्यतां हि तत्रैव युक्तः सुचिरं निवासः ॥६॥

मृत्पिण्डरूपो जनको यदीयः पितामहो यस्य कुलाल एव।
स कुम्भजन्माजनि सूत्र[2]कारः कोणे वसन् क्वापि चिरं यदीये ॥७॥

सौभाग्यलक्ष्मीं नवचन्दनानां मन्दानिलानामपि मौक्तिकानाम्।
अयातयामामभिनिर्विशन्ति प्रायेण कौमारहरा यदीयाः ॥८॥

यत्रोभयानुच्चतरान् [3]रसालानालक्ष्य विन्ध्यस्मयभङ्गदक्षान्।
तपस्यति [4]न्यस्तभरः सुखेन तेष्वेष मैत्रावरुणिर्महर्षिः ॥९॥

---

१. दक्षिणामूर्त्तिरूप इत्यर्थः; २. द्रमिलभाषाव्याकरणसूत्रप्रणेता।
३. रसालान् ईक्षूंश्चूतांश्च; ४. न्यस्तोऽर्पितो भरो विन्ध्यस्मयभञ्जनश्रमो येन सः।

उपत्यकामण्डलनिर्विशेषे देशे हि यस्मिन् मलयाचलस्य।
उदेति मन्दं व्यजनानिलोऽपि चमत्कृतश्चन्दनसौरभेण ॥१०॥
पदे पदे चन्दनकाननोत्थैः फणाधरैर्यत्र निपीयमानः।
जातः प्रभूतोऽपि बहिः प्रसर्पन् मन्दः किलैवं मलयानिलोऽभूत् ॥११॥
मन्दानिलं मन्मथमूलकन्दं यत्रोपयोक्तुं मुनयस्त्रसन्तः।
वैयाघ्रचर्मव्यजनोपजातैर्वातैर्व्रतं केचन वर्त्तयन्ते ॥१२॥
[१]अयत्नलभ्यान्ययमद्भुतानि शरासकाण्डानि शरानसङ्ख्यान्।
यत्रैव पश्यञ्जगदेकवीरः स्थिरं मनोजः शिबिरं चकार ॥१३॥
ताम्रातरङ्गानिलताडितासु [२]माकन्दवाटीषु मनोजवीरे।
यत्रावतीर्णे महता बलेन तद्बाहुगुप्तास्तरुणा रमन्ते ॥१४॥
वर्षोपला यत्र हि मौक्तिकानि काष्ठानि गन्धद्रुमकाण्डखण्डाः।
कस्तेन विस्पर्धितुमुत्सहेत देशः शिलाकण्टकपूरितोऽन्यः॥१५॥
स्वर्गं नवं स्रष्टुमना मुनिः प्राक् ससर्ज यत्सम्मुखदेश[३] एव।
तन्मारुतस्पन्दनमात्रतोऽपि स्वर्भोगभाग्यं सुलभं विजानन् ॥१६॥
अन्या विशन्त्यः सरितः समुद्रमापूरयन्ते जलजन्तुभिः स्वैः।
रत्नापगा[४] यत्र तु सम्पतन्ती रत्नाकरत्वं रमणस्य दत्ते ॥१७॥
यत्सङ्गमादेव भवन्ति [५]मुक्ताः सा जाह्नवी सर्वजनीनमेतत्।
ततो विदुर्दक्षिणजाह्नवीति तादृग्विधां यत्र हि ताम्रपर्णीम् ॥१८॥
दत्ते सुतां स्वामिव यां समस्तैरलङ्कृतां रत्नगणैरगस्त्यः।
सरस्वते [६]गोत्रमहत्तराय यतो [७]गृहीता हरिणापि वेदाः॥१९॥

---

१. 'अयत्नलभ्यं रथम्' इति खपुस्तके पाठः; २. आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः। कामाङ्गो मधुदूतश्च माकन्दः पिकवल्लभः॥ इत्यमरः।

३. दक्षिणादिग्देशो हि पाण्ड्यसम्मुखदेशः।

४. रत्नापगा मुक्तारत्नाप्रसूस्ताम्रपर्णी; ५. कैवल्यभाजो मौक्तिकानि च।

६. गोत्रशब्दः पर्वतवंशयोः; ७. गृहीता आसादिता अधीताश्च।

अभ्यापतन्तीमनुवासरं यामगस्त्यगोत्रप्रभवेति सिन्धुः।
विकीर्य पुष्पैरिव मौक्तिकौघैः प्रत्युद्व्रजन् प्रापयते किमन्तः॥२०॥

स्त्रोतोमुखैरम्बुनिधिं प्रविष्टं [१]स्वभावतः स्वादु यदीयमम्भः।
निर्मथ्य लब्धं त्रिदशैः कदाचिदास्वाद्यतेऽद्यापि सुधा सुधेति ॥२१॥

क्षारोदकास्वादभवं विपाकमपाकरिष्यन्निव कुम्भजन्मा।
जहाति शैलं मलयं न जातु पातुं प्रकृत्या मधुरं यदम्भः॥२२॥

यां सर्वरत्नैकखनिं विहाय गङ्गामधात् केन गुणेन शम्भुः।
का प्रीतिरर्के सति कैतकेऽपि न हीश्वराः पर्यनुयोज्यशीलाः॥२३॥

वैदूर्यनीलोपलमौक्तिकानि यदादिमध्यान्तसमुद्भवानि।
सा ताम्रपर्णी सरिदेव यत्र साधरणी काचन [२]सारणीव ॥२४॥

तस्मिन् विशाले तरुणेन्दुमौलेरावासभूतं पदमद्भुतानाम्।
वनं जगत्पावनमस्ति किञ्चिन्नीपद्रुमाणां निकषा [३]वृषाद्रिम्॥२५॥

अज्ञाततिग्मांशुकरावमर्शा छाया यदीया तमसां विहन्त्री।
वातेरितं पुष्परजो यदीयं निश्शेषमुन्मार्ष्टि रजः प्रजानाम्॥२६॥

अन्तर्निलीनभ्रमरैः प्रसूनैराभाति यद् बद्धरजोभिरीषत्।
सत्त्वेन निर्जित्य रजस्तमश्च सम्मूर्च्छितेनेव समन्ततोऽपि ।२७॥

यत्राभिषिञ्चन्ति मधु क्षरन्तो वृक्षा भुवं मूर्त्तिमिवाष्टमूर्त्तेः।
झङ्कुर्वते कर्णरसायनानि सामानि गायन्त इव द्विरेफाः॥२८॥

वक्त्राणि यस्मिन् मुनिपादपानामाभाति पुष्पाण्यतिनिर्मलानि।
समाहृता मुक्तिजुषां प्रदातुं शशाङ्कखण्डा इव शङ्करेण॥२९॥

---

१. 'वर्षासु वर्षासु' इति खपुस्तके पाठः।

२. सारणी स्वल्पनदी।

३. वृषो धर्मे बलीवर्दे शृङ्ग्यां पुंराशिमेदयोः। श्रेष्ठे स्यादुत्तरस्थश्च वासमूषिकशुक्रले॥
(मेदिनी. १६७।२५-२७)

हैमेऽपि—वृषो गव्याखुधर्मयोः। पुंराशिमेदयोः शृङ्ग्यां बासके शुक्रलेऽपि च। श्रेष्ठे स्यादुर्त्तरस्थश्च।
(२।५८४-५८५)

सम्पूर्यमाणात् प्रतिपौर्णमासं शाखाग्रसङ्घट्टनतोऽवधूतात् ।
मृगाङ्कबिम्बाद् गलिता इवोर्व्यां मृगाः शतं यत्र परिभ्रमन्ति ॥३०॥

प्रत्यर्थिनो यत्र महेश्वरस्य तत्तत्क्षणोदन्तविचारणाय ।
चारा नियुक्ता इव मन्मथेन चरन्ति भृङ्गा सममन्यपुष्टैः ॥३१॥

प्रागम्बयाथ प्रमथाधिपेनाप्यध्यासिते यत्र कदम्बमूले ।
माकन्दजम्बूवटपादपानां मन्दाक्षमन्दानि कुलान्यभूवन् ॥३२॥

शाखासु शाखासु फलानि यत्र भान्तीव नाना परमार्थतस्तु ।
सर्वागमानां फलमेकमेव सन्दृश्यते तच्च कदम्बमूले ॥३३॥

तृगीकृते[१] यत्र वसद्भिरार्यैश्चराचरेऽस्मिन् पशवश्चरन्ति[२] ।
वैकुण्ठवासोऽपि तृणीकृतस्तैर्न चेत् कुतोऽसौ हरिणादृतः[३] स्यात् ॥३४॥

पुष्पाय वृक्षाग्रपदाधिरूढान् पुत्रान् मुनीनामुपलालयन्तः ।
व्याजेन देवास्तपसोऽभिसधिं पृच्छन्ति नित्यं परिशङ्कमानाः ॥३५॥

रोमाञ्चसान्द्रा इव कुम्भलौधैरुदश्रुपूर्णा इव शीधुवृष्ट्या ।
भस्मानुलिप्ता इव पुष्पधूल्या दृष्ट्वा मुनीन् यत्र भवन्ति नीपाः ॥३६॥

यस्मिन् महेशानकराश्रयेण केनापि कुल्येन कृतावलम्बाः ।
मृगा निरातङ्कलवश्चरन्ति मृगादनैः प्रत्युत सेव्यमानाः ॥३७॥

व्याहन्यमाना मृगयासु यस्मिन् व्याघ्राः शिवत्वं प्रतिपद्य सद्यः ।
अस्मत्कुलीनोऽसि[४] महानसीति हन्तॄन् किरातानुपसान्त्वयन्ते ॥३८॥

दृष्टेष्विवानुश्रविकेषु यस्मिन् धीरा वितृष्णा इति नाद्भुताय ।
स्वर्गाधिके धामनि संवसन्तः स्वर्ग्याणि कर्माणि किमाद्रियेरन् ॥३९॥

पाणौ मृगं पार्श्वतले किरातीं पर्यङ्कबन्धे च गजं महान्तम् ।
सम्मानयन्नेव चरत्यरण्ये पञ्चाननः[५] कोऽप्यधुनापि यस्मिन् ॥४०॥

---

१. तृणीकृतेऽवज्ञाते अथ च तृणत्वमापादिते।
२. नीपवनातिरिक्ते प्रपञ्चे ये चरन्ति ते पशव इति तात्पर्यम्; ३. तृणं हि हरिणादृतं भवितुमर्हति।
४. अस्मत्कुलीनत्वोक्तिः किरातरूपपरिग्रहापेक्षया; ५. पञ्चाननः शिवः सिंहश्च।

यद् द्वादशान्तैकविभावनीयं त्र्यन्तदृश्यं कथमस्तु तन्नः।
इत्यध्यवस्यैव तदावसन्ति ब्रह्मर्षयः पाशुपता महान्तः॥४१॥

वल्ल्यो यदीयाः कठवल्लिकाद्याः शाखाश्च माध्यन्दिनकाण्वमुख्याः।
सर्वागमस्तोममयस्य तस्य शक्नोति को वर्णयितुं प्रभावम् ॥४२॥

तस्मिन् कदम्बद्रुममूलसीम्नि तपःपरीपाकफलं जनानाम् ।
आस्ते जगन्मङ्गलमङ्गजारेर्लिङ्गं दयाविग्रहवत्त्वलिङ्गम् ॥४३॥

यद् गूहितं वाग्भिरकृत्रिमाभिर्यद् द्रष्टुकामा मुनयो यतन्ते ।
नाम्ना च रूपेण च सुन्दरं तत् प्रत्यक्षमास्ते प्रियकस्य[1] मूले ॥४४॥

पाण्ड्यार्पिता भात्यधुनापि यस्मिन्नृज्वायता वेत्रनिपातरेखा ।
नानारहस्यागमबोधनीयां नादात्मतामस्य विवृण्वतीव ॥४५॥

समस्तदिव्यागमसम्प्रतीते [2]तारात्मके तत्र महेशलिङ्गे ।
अर्धेन्दुरर्धेन्दुतयैव दृष्टो बिन्दुस्तु सिन्धुः स्तिमिता जटाग्रे ॥४६॥

मूलञ्च मौलिञ्च विवेक्तुकामौ यस्याक्रमेतां विधिरच्युतश्च ।
तन्मूलमेतत्तरुमूलगम्यं तन्मौलिरेतत्तरुमौलिवेद्यः॥४७॥

छंन्नं प्रसूनैः स्नपितं मरन्दैरलङ्कृतं भोगिभिरापतद्भिः।
इत्थं स्वयं पूजितमस्ति नित्यं स्वायम्भुव सुन्दरनाथलिङ्गम् ॥४८॥

एकं किल ब्रह्म यदद्वितीयं वक्तुं चतस्रः श्रुतयोऽपि नालम् ।
तादृग्विधान्येव भजन्ति तस्य ब्रह्माणि पञ्चावयवत्वमुद्राम्[3] ॥४९॥

तस्मिन्नहम्पूर्विकया विशुद्धिरपास्तबन्धैरधुनापि जीवैः।
सम्बाधदुस्स्थैरजनिष्ट लिङ्गे सार्वत्रिकी दन्तुरतेति शङ्के ॥५०॥

चिद्रूपमानन्दमयं च वेदाः शैवं वपुः शाश्वतमामनन्ति ।
दयामयं तेऽपि विदुर्न जातु दृष्टं तदत्रैव कदम्बमूले ॥५१॥

---

१. प्रियकस्य नीपस्य, नीपप्रियककदम्बास्तु हलिप्रिये, इत्यमरात्। नीपः कदम्बबन्धूकनीलाशोकद्रुमेषु चेति (मेदिनी १०८.८); २. तारात्मके प्रणवात्मके।
३. अवयवत्वमुद्रां सद्योजातवामदेवतत्पुरुषाघोरेशानाख्यमुखपञ्चकत्वरूपामित्यर्थः।

गूढं भवामीत्यभिमानमात्रं गूढं परं ज्योतिरिदं कथं स्यात् ।
यन्मूर्धनि प्रत्युत चन्द्ररेखा तेनैव तत् प्रैक्षि कदम्बमूले ॥५२॥
ख्याताः कला यद्यपि तत्र लिङ्गे [१] पञ्चैव सिद्धाः शिवशासनेषु ।
तथापि तेनाध्युषिते तु देशे कलाश्चतुःषष्टिरपि स्फुरन्ति ॥५३॥
कृष्णार्जुनाभ्यां परिपूज्य लिङ्गमासादिताः सिद्धय इत्यवेत्य ।
कस्तूरिकाभिर्घनसारकैश्च लिम्पन्ति [२] लोकाः खलु लिङ्गमेतत् ॥५४॥
यत्पीठिकाधस्पदमात्रलग्ना वाणी बहिर्न क्रमते कथञ्चित् ।
तत् कारणेशत्रितयातिवर्त्ति लिङ्गं कया वर्णयितव्यमुक्त्या ॥५५॥
सदाभिषिक्तं विबुधस्रवन्त्या सदा समभ्यर्चितमिन्दुना च ।
लिङ्गं तदैशं विजने वनेऽपि लोकत्रयक्षेमकरं बभूव ॥५६॥
कूजत्सु वन्येषु विहङ्गमेषु गायत्सु चाखण्डलगायनेषु [३] ।
प्रीतिं दधौ तुल्यवदेव देवः कस्तद्दृशा तेषु भवेद् विशेषः ॥५७॥
विनोद्यते यः किल योगिवृन्दैर्विद्याधरैरप्सरसां गणैश्च ।
व्याधैर्मृगैः पक्षिभिरप्यरंस्त स देवदेवश्चिरमत्र लिङ्गे ॥५८॥
अन्तर्हितावस्थितमत्र लिङ्गे तमारराधुस्तरवः प्रसूनैः ।
शृङ्गाग्रकण्डूयनतः कुरङ्गा निर्मोकपट्टार्पणतो भुजङ्गाः ॥५९॥
सन्ध्यासु सन्ध्यासु गणैरदृश्यैरारात्रिकं साधितमस्फुटं यत् ।
चक्रे जरज्जम्बुकवक्त्रलग्नैर्ज्वलद्भिरेतज्ज्वलनैः प्रकाशम् ॥६०॥
वन्यद्विपेष्वन्यतमो गणेशो व्याधार्भकेष्वेकतमः कुमारः ।
साऽप्यादिशक्तिः शबरीषु कापि भूत्वा विजह्रुः सविधे पुरारेः ॥६१॥
इत्थं परिभ्राम्यति कालचक्रे प्रणश्यति प्रोद्यति च प्रपञ्चे ।
देवेषु योगिष्वपि केऽपि केऽपि शनैरबुध्यन्त रहस्यमेतत् ॥६२॥

---

१. पञ्च अकारोकारमकारनादविन्दुरूपाः।

२. लिम्पन्ति लेपनरूपया पूजया सम्भावयन्ति। कस्तूरिकायाः कृष्णत्वात् घनसारकाणामर्जुनत्वाच्च तेषु पूजासाधनत्वाभिकानो जनानामित्युत्प्रेक्ष्यते।

३. 'गायकेषु' इति खपुस्तके पाठः।

प्रत्यग्दृशा प्राक्तनपुण्ययोगादाप्तोपदेशैरनुमानतश्च।
क्रमाद् द्युलोके बहलीबभूव कदम्बकान्तारकथाप्रसङ्गः ॥६३॥

दूरात् प्रणेमुः कतिचिद् वनं तदारात् परे नीपतरूनपश्यन्।
विचिक्युरेके तदनुप्रविश्य धन्याः परे तद् ददृशुश्च लिङ्गम् ॥६४॥

आनन्दजैरश्रुभिरभ्यषिञ्चन्नानर्चुरप्यक्षिभिरेव फुल्लैः।
न्यवेदयन्तापि निकामधौतमात्मानमानन्दसुधाप्लुतं ते ॥६५॥

गूहत्सु युष्मास्वपि गूढमेतद्रहस्यमद्राक्ष्म वयं किलेति।
अनुश्रवान् केचिदुपालभन्त केचिद्विधिं केऽपि शिलादसूनुम् ॥६६॥

वागीश्वरा वाग्भिरपूजयन्त ध्यानाध्वनीना हृदि दध्युरेनम्।
बाह्यार्चनामात्रपरायणास्तु सामग्र्यलाभादलभन्त खेदम् ॥६७॥

अभ्रापगावारिभिरभ्यषिञ्चन् सुधान्धसः सुन्दरनाथलिङ्गम्।
तत्रासमर्था मुनयो महीस्थास्तस्तम्भिरे केवलमश्रुपूर्णाः ॥६८॥

आलक्ष्य पूजाव्यवसायमेषामपामभावात् परमं च खेदम्।
दीनानुकम्पानिधिरिन्दुमौलिर्दिव्यं सरस्तत्र विधातुमैच्छत् ॥६९॥

स दक्षिणस्यां दिशि बाणपाते सरो विधास्यन्नमृतांशुमौलिः।
सकृद्विलासादिव निर्बिभेद तीक्ष्णेन भूमिं त्रिशिखाञ्चलेन ॥७०॥

आविध्य शूलं भुवि सद्य एव पादाङ्गदं[१] पश्यति[२] सुन्दरेशे।
भक्तस्य ते न क्षतिरस्ति जातु शेषः [३]सुखीत्याह सुता हिमाद्रेः ॥७१॥

आविध्यमानात् त्रिशिखाभिघातैरधःकपालाज्जगदण्डभित्तेः।
अम्भो यदण्डावरणायितं तदुद्बुद्बुदं तत्क्षणमुद्बभूव ॥७२॥

त्रैविक्रमे कर्मणि शार्ङ्गिणापि प्रवर्तितं यत् किल पूर्वमम्भः।
[४]अधोगतिं प्राप तदेव लेभे शिवास्त्रयोगाद् गतिमित्थमूर्ध्वाम् ॥७३॥

---

१. पादाङ्गदं तद्रूपं शेषम्।

२. पश्यतीति। शूलस्यापातालप्रवेशादादिशेषशिरसि तदभिघातशङ्कया दर्शनम्।

३. इत्याहेति। इत्युक्त्वा भर्तुः शङ्कामपनुनोदेत्यर्थः।

४. अधोगतिं भोगवतीसंज्ञया पातालगतिं अथ च दुर्गतिम्।

दिदृक्षमाणेन महाद्भुतं तच्छिवेन यावन्नमितो न मौलिः।
तावत् सरस्तत्कृतमुत्तरङ्गं ततः स्त्रवन्त्या विबुधस्त्रवन्त्या ।।७४।।

सरस्त्रिशूलप्रभवं पुरारेस्तथात्यगाधं तदभूत् क्षणेन।
यथात्र देवोऽवतरन् प्लवेत त्रिविक्रमः क्रान्तजगत्त्रयोऽपि ।।७५।।

नौर्वान्न रामान्न च कुम्भयोनेर्यस्यास्ति भीतिस्तदवेक्ष्य तीर्थम्।
आश्वासमाजग्मतुरर्णवस्थौ शश्वतमौ तावपि कूर्ममीनौ ।।७६।।

आविर्भवन्तीः सलिले समन्तादम्भोजिनीरुत्पलिनीश्च तस्मिन्।
दृशौ पिबन्त्यौ परमस्य धाम्नः प्रीतिं परां प्रापतुरर्कचन्द्रौ ।।७७।।

त्रैगुण्यरूपं त्रिशिखं हि शम्भोर्धीरा जगत्कारणमामनन्ति।
तत्सम्प्रसूतेऽपि सरस्यमुष्मिन् का हेतुचिन्ता कमलोत्पलानाम् ।।७८।।

शैवालनीलं बहिरम्बुजाभमन्तर्घटैरुद्ध्रियमाणमच्छम्।
त्रैगुण्यरूपं त्रिशिखोद्भवं तदम्भो निजान् हेतुगुणान् व्यनक्ति ।।७९।।

प्राचीनमब्जं परिहृत्य सद्यो जग्राह भानुर्जलजं तदीयम्।
अत्रैव लक्ष्मीः स्थितिमाबबन्ध चतुर्मुखोऽतश्चकमे प्रसूतिम् ।।८०।।

आचामत स्नात सरस्यमुष्मिन्नस्याम्भसा मामभिषिञ्चतेति।
देवान् महर्षीनपि चान्वगृह्णाद् वाचा भगिन्या विभुरागमानाम् ।।८१।।

खातं शूलशिखाञ्चलेन सलिलैः पूतं जटातीर्थजैः
प्रत्यक्षेण च शाम्भवेन विधिना प्राप्तं परां ग्राह्यताम्।
तीर्थे तत् प्रतिपद्य तापसगणा भागीरथीं तत्यजु-
र्मन्दं चादरमादुधुः सुरगणा मन्दाकिनीस्त्रोतसि ।।८२।।

।। इति महाकविश्रीनीलकण्ठदीक्षितप्रणीते शिवलीलार्णवे
द्वितीयः सर्गः ।।२।।

●

# अथ तृतीयः सर्गः

अथ जातु पुरन्दरः सुधर्मामधितिष्ठन् सह सप्तभिर्दिगीशैः ।
अविजेयमनुक्षणोपचित्या विमतं वृत्रममन्त्रयद् विजेतुम् ॥१॥

चतुरङ्गमिदं महद् बलं नश्चतुरं गन्तुमहो न यत्समीपम् ।
न बल भुजयोः क्रमेत तस्मिन्नवशादञ्जलिबन्धशिक्षितौ यौ ॥२॥

अमृताशनजातिमात्रजेतर्यलमस्त्राणि न तत्र दैवतानि ।
परिवृत्त्य पतेयुरासुराणि प्रबलं यूथपतिं तमेत्य सद्यः ॥३॥

निकृतिं शरणं वृणीमहे चेन्नियमादापदियं क्षमा तरीतुम् ।
निर्ऋतिं परिपृच्छतामुमर्थं स हि नः पुण्यजनेषु सम्प्रतीतः ॥४॥

असुरा हि भवेम युध्यमानाः कपटेनेति यदि स्थितं मतं वः ।
असुरत्वमपेक्षितं विरान्नः सुरभावादतिगर्हितादमुष्मात् ॥५॥

स हि सम्प्रति सागरान्तरीपे क्वचिदालम्ब्य निराश्रयं समाधिम् ।
अविशङ्कितमास्थितस्तपस्यां सुखजय्यो यदि रोचते भवद्भ्यः ॥६॥

इति वादिनि वल्लभे सुराणामनुजज्ञुर्हरिदीश्वराः सहर्षम् ।
प्रकृतिर्ह्यपथे रुचिः प्रजानां किमुत स्वामिनि तादृशेऽपि लब्धे ॥७॥

स हि यत्र तपश्चकार वृत्रस्तदनुप्राप्य तपोवनं महेन्द्रः ।
परमेण समाधिनोपविष्टं पविना तं विनिपातयाम्बभूव ॥८॥

कृतकृत्यममुं निवर्त्तमानं कियदप्यप्रतिसन्दधानमेनः ।
विकृता वपुषा विकीर्णकेशी सममेवानुससार वृत्रहत्या ॥९॥

पुनरेत्य यथापुरं सुधर्मां पुरुहूतः स्तुवतो विसृज्य देवान् ।
अवरोधमभीप्सुरालुलोके विशतीं स्वेन सहैव वृत्रहत्याम् ॥१०॥

अवकीर्य पविं विकीर्य केशानसमालोच्य च कृत्यमाप्तवर्गैः ।
स तयानुगतः पलायत द्राक् समरेष्वप्रतिमल्लसाहसोऽपि ॥११॥
अपथं तदभीक्ष्णमादृतं यैरपि साक्षादुपदिष्टमादितश्च ।
जहसुः प्रथमं त एव शक्रं प्रकृतीनां प्रभवत्स्वयं स्वभावः ॥१२॥
विपिनाद्विपिनं गिरिं गिरिभ्यो जलराशेर्जलराशिमन्ततश्च ।
जगतो जगदप्ययं प्रधावन्मुमुचे नैव तया धियेव जीवः ॥१३॥
निपुणं स पुरन्दरो विलिल्ये सरसि क्वापि सरोजनालतन्तौ ।
शतशः समुपात्त[१]सप्ततन्तोरवलम्बाय बभूव कोऽपि तन्तुः ॥१४॥
अवलोक्य तदन्तरं चिकीर्षन् नहुषो नाम नृपोऽधिकारमैन्द्रम् ।
अनियन्तृकताविषादमग्नैरनुमेने कथमप्यमर्त्यलोकैः ॥१५॥
अयथावदनुष्ठिताश्वमेधः कियता चैष दिवं गतः शुभेन ।
प्रभुतामपि वर्तयन् सुराणां प्रकृतिं स्वां न जहौ तमःप्रधानाम् ॥१६॥
पृथिवीमनुशासतः पुरा ये रिपवस्तस्य महीभुजो बभूवुः ।
अधुना विषयेष्वसावमीषामशिषद् वारिमुचो न वर्षतेति ॥१७॥
अहमस्म्यभिवर्षुकः प्रजानां यजनीयश्च ततोऽहमेव तासाम् ।
क इमे हविषो मखे नराणामिति सर्वानयमाक्षिपत् सुधाशान् ॥१८॥
सवनोपनतं हविः समस्तं मयि संवेदय मद्गृहीतशेषम् ।
प्रतिपादय तस्य तस्य पश्चादिति मूढः प्रशशास हव्यवाहम् ॥१९॥
उदधेः सुरसिन्धुतोयपूर्णादुदपद्यन्त यदद्भुताः पदार्थाः ।
तदियं निपुणं विशोधनीयेत्यखिलं गाङ्गमवाकिरत् स तोयम् ॥२०॥
अवनेर्दिवमागतान् स्वयूथ्यानसकृत् तेषु च शीलितस्वभावान् ।
स हि मूलबलं समग्रहीत् स्वं न विशश्वास निसर्गदैवतानि ॥२१॥

---

१. सप्ततन्तुशब्दः क्रतौ सप्तसङ्ख्याकतन्तुषु च। सप्तभिश्छन्दोभिरग्निजिह्वाभिर्वा तन्यते। यद्वा तानि सप्त तन्यतेऽत्र। सितनिगमि (उ. १.६९) इति तुन्।

बहुभिस्तुरगैर्गजैश्च भाव्यं द्युतरून् याचत यद्यमी न दद्युः।
विनिपातयतेति वीतशङ्कं वनपालान् प्रशशास वैधवेयः ॥२२॥
अवितीर्णफला उपासिता अप्यवनिस्थेन पुरात्मना सुरा ये।
द्विगुणं त्रिगुणं च निर्दयैस्तान् दनुजैरेव स दण्डयाम्बभूव ॥२३॥
अमरैः प्रतिमासमद्यमानं कुलकूटस्थमवेक्ष्य खेदितोऽसौ।
अवनाय समादिदेश भृत्यान् सितपक्षात्यय एव शीतभानोः ॥२४॥
स स मित्रमभूदमुष्य यं यं पुरुहूतो विरुरोध दानवेषु।
कथयन्ति कथाममुष्य ये ये कुपितोऽयं ज्वलति स्म तेषु तेषु ॥२५॥
शयितुं परिवर्त्तितुं च बिभ्यन्नयनैर्निमिषैः स सर्वगात्रे।
नयनानि विभज्य निर्जरा मे प्रतिगृह्णन्त्विति सन्दिदेश मूर्खः ॥२६॥
मृगपक्षिसरीसृपा मनुष्याः पशवो ये निहतास्त्वयाश्वमेधे।
त इमे विचरन्ति हन्तुकामा इति तं शश्वदभीषयन्त देवाः ॥२७॥
इयमेव शचीति दर्शयन्तो गणिकां कामपि निर्जराः सुराणाम्।
अतिसन्दधिरे सुखेन मूढं प्रभुता का प्रकृतेरसम्मतस्य ॥२८॥
शिबिकामधिरुह्य जातु गच्छन् स महर्षीन् विनियुज्य तत्र धुर्यान्।
असकृन्निजगाद सर्प सर्पेत्यपि तं कुम्भभवस्तथा भवेति ॥२९॥
अशनिर्ह्रसमाप्त एव भोगे पतितो मूर्धनि तस्य शापरूपः।
अत एव पतन्नपि क्षमायां नहुषो न त्यजति स्म [१]भोगिभावम् ॥३०॥
चिरलुप्तकथे मघोनि तस्मिन्नपि तस्य प्रतिरूपके प्रनष्टे।
अधिगन्तुमनाः प्रवृत्तिमैन्द्रीं युयुजे योगदृशा गुरुः सुराणाम् ॥३१॥
सरसीरुहनालतन्तुलीनं सरसि क्वापि समेत्य योगगूढः।
प्रतिबोधयति स्म देसिकस्तं करणीयं करुणाप्लुतैर्वचोभिः ॥३२॥
चकितः समयं कियन्तमस्मिन् सरसि स्थास्यसि खेदयन्नमर्त्त्यान्।
न हि सम्यगनिष्कृतं तदेनः प्रलये प्राकृतिकेऽपि मुञ्चति त्वाम् ॥३३॥

१. भोगिभावं सुखित्वं सर्पत्वं च।

सकलाघनिबर्हणे समाधौ वसतस्तस्य वधे तु कः समाधिः ।
चरणं परिहृत्य चन्द्रमौलेः शरणं संसरतां यदाविरिञ्चात् ॥३४॥
चर पाशुपतव्रतं चरन् सन्नवनावायतनानि शाम्भवानि ।
अनुयास्यं केवलं न तु त्वामधिकुर्वीत शिवाज्ञया तदेनः ॥३५॥
विशतस्तव यत्र सम्प्रसीदत्यमृतेनेव विशोधितोऽन्तरात्मा ।
करुणावरुणालयो महेशः कलुषं तत्र निवारयिष्यतीति ॥३६॥
स तथेत्यभिनन्द्य शासनं तत् कलितस्वस्त्ययनश्च देशिकेन ।
अधिरुह्य सुरद्विपं प्रतस्थे विविधान्यायतनानि विश्वमूर्त्तेः ॥३७॥
स गिरीन् हिमशैलकन्दरादीन् सरितो जह्नुसुताकलिन्दजाद्याः ।
विपिनानि च नैमिशादिमानि व्यचरत् पाशुपतव्रती महेन्द्रः ॥३८॥
स [१]तपोवनदर्शमध्युवास प्रयतः सन्निममज्ज तीर्थदर्शम् ।
द्विजवेदमतर्पयद् घनौघैर्व्रतवेदं नियतः समाचचार ॥३९॥
त्रिविधान्यपि शाम्भवानि लिङ्गान्ययजद्वस्तुभिरान्तरैश्च बाह्यैः ।
लभते स्म न शान्तिमात्मनोऽयं क्वचिदप्येषु कुतो हि पातकस्य ॥४०॥
स तपांसि बहूनि तप्यमानः कलुषेणानुयतानुतप्यमानः ।
भवबन्धनिराकरिष्णुशाखापवनं नीपवनं समाससाद ॥४१॥
उपहारमनुत्तमं पुरारेरवतंसोत्पलसौरभं हरन्तः ।
अभिजग्मुरिवानिलास्तदीया अतिथिं स्वामिनमागतं चिराय ॥४२॥
स कदम्बवनीपरागलेशैः शिवगङ्गोदकशीकरानुविद्धैः ।
पवनोपहृतैः पतिः सुराणां परमां कामपि निर्वृतिं जगाहे ॥४३॥
प्रससाद मनः प्रसेदुरक्षीण्युपजज्ञे बलमुद्बभूव शौर्यम् ।
स हि सन्निचकर्ष यावदित्थं कलुषं विप्रचकर्ष तावदस्य ॥४४॥
अतिहृष्टमनाः स तैर्निमित्तैरनुसन्धाय गिरं पुरोधसस्ताम् ।
परिनिश्चिनुते स्म तत् त्रिलोक्यां परमं धाम हरिः परस्य धाम्नः ॥४५॥

---

१. तपोवनदर्शे सर्वाणि तपोवनानि दृष्ट्वा। 'कर्मणि दृशिविदोः साकल्ये' (३.४.२९) इति णमुल्।

सकलाद्भुतधाम्नि सीम्नि तस्यां सहसैवायमवाप्लुतो गजेन्द्रात् ।
प्रयतः प्रविवेश काननं तत् सह सर्वैश्च विना तदेकमेनः ॥४६॥

स ददर्श फणातपत्रगुप्तान् नकुलानातपतापितानहीनाम् ।
अपि दृप्तचरत्तरक्षुदंष्ट्रामुखकण्डूयितलोचनां कुरङ्गीम् ॥४७॥

स लतां कमपि द्रुमं प्रपन्नां सविधस्थान्यतरूपगूहभीत्या ।
प्रतिसंहृतपल्लवामपश्यत् परिकृष्टामपि कौतुकात् किरातैः ॥४८॥

उपहृत्य चलद्रुमप्रवालान् कदलीरिक्षुलता मृणालिनीश्च ।
नमतः शतशो हरेः समक्षं न विषेहे वनकुञ्जरान् सुरेभः ॥४९॥

पथि वीक्षितवद्भिरादरेण प्रमथैः पाशुपतैर्महर्षिभिश्च ।
सविधं तपसातिनिर्मलोऽयं समुपानीयत सुन्दरेश्वरस्य ॥५०॥

अविचिन्त्यमदृष्टमश्रुतं च त्रिषु लोकेष्वपि दिव्यलिङ्गमेतत् ।
विकचैर्नयनोत्पलैर्विडौजा विचकार[1] प्रथमोपहारहेतोः ॥५१॥

प्रमदाश्रुपरिप्लुतैस्तदानीं नयनैराचरणाग्रमाललाटम् ।
द्रवतां प्रतिपद्य भक्तियोगाद् ददृशे वारिमयीव तस्य मूर्तिः ॥५२॥

अथ दण्डवदानतस्य शम्भौ ददृशे दृष्टिमयी तनुर्मघोनः ।
उपहारकृते पुरो विकीर्णा विकचेन्दीवरमालिकेव दिव्या ॥५३॥

सगणं सवृषं सनन्दिकेशं ससुतं साम्बमपि प्रभुं तमाद्यम् ।
परिपूजयितुं चकाङ्क्ष शक्रो महतामेव मनोरथोऽपि तावान् ॥५४॥

स्मृतसन्निहितोऽथ विश्वकर्मा सह दिव्येन पुरोधसा तदानीम् ।
शिरसा प्रतिगृह्य भर्त्तुराज्ञामयतिष्टायतनाय चन्द्रमौलेः ॥५५॥

विधृतं करिभिर्विमानरूपं विपुलं प्राक्प्रतिहारमेकभूमम् ।
शिखरोल्लिखिताम्बरं स[2] शिल्पी विदधे गर्भगृहं शुभे विलग्ने ॥५६॥

अतिसुन्दरमर्धमण्डपं च प्रतिहारत्रयभावितान्तरेण ।
महता मणिमण्डपेन सक्तं विदधे विश्वशुभाय विश्वकर्मा ॥५७॥

---

१. विचकार विकीर्णवान्; २. 'शिल्पम्' इति खपुस्तके पाठः।

प्रतिमाः परिवारदेवतानां विविधान्यायतनानि तत्र तासाम् ।
परितः परितोऽपि पञ्च सालानकरोदुन्नतगोपुरोपगूढान् ॥५८॥
शुभवास्तुनि शूलपुष्करिण्या रुचिरे रोधसि पश्चिमे स शिल्पी ।
भवनं मणिचित्रितं भवान्या गणनाथस्य च कल्पयाम्बभूव ॥५९॥
अपरानपि मण्डपप्रभेदानभितश्चोत्सववीथिका विशालाः ।
असृजत् स मरुत्वतोऽनुरूपान् प्रभुताभक्तिविवेकपाटवानाम् ॥६०॥
प्रहसद्वदनं प्रसन्ननेत्रं द्विभुजं दक्षिणतो धृतोत्पलं च ।
करकोपलवद् घनीभवन्त्या दययेवाकृत विग्रहं स देव्याः ॥६१॥
अधिकानि ममेत्यहर्निशं यैर्मघवा शोचति लोचनैः समन्तात् ।
अवलोक्य स विश्वकर्मकर्माण्यलमेतानि किमित्यशोचदेभिः ॥६२॥
दयितस्य दिदृक्षतेऽपसव्यं वपुरेषा किल वामभागगेति ।
कृतमिङ्गितवेदिना मघोना पदमस्याः किमु दक्षिणेन शम्भुम् ॥६३॥
अतिचारुमशेषलक्षणाढ्यं ललितं बिम्बमिमं स्वतो विविक्षुम् ।
हरिरर्थयते स्म शक्तिमाद्यां गुरुरावाहयदन्वमंस्त शम्भुः ॥६४॥
अखिलं जगदात्मसम्प्रसुतं परिपुष्णाति दृगेव यत् किलास्याः ।
अभिधामपि मीनलोचनेति व्यदधादिन्द्रपुरोहितसततोऽस्याः ॥६५॥
नियतां कनकारविन्दपूजां दिविजैः कर्तुमना हरिः सरोजैः ।
पवनं प्रजिघाय देवदूतं स्वयमस्नादथ शूलपुष्करिण्याम् ॥६६॥
कृतनित्यविधौ विलम्बमाने शिवमभ्यर्चयितुं क्षणं सुरेशे ।
कमलैरुदभावि जातरूपैः कमलिन्यामतिसौरभैरमुष्याम् ॥६७॥
स्वयमाहरदर्चनाय शम्भोः सुरभीण्यम्बुरुहाणि काञ्चनानि ।
कनकाम्बुजिनीति नाम तस्याः कलयन् विस्मित एष सस्मितश्च ॥६८॥
क्व नु काञ्चनता क्व सौरभं तद् दिवि सङ्कल्पभवेषु पङ्कजेषु ।
प्रभवत्यखिलं हि निर्जराणां ध्रुवमाध्यासिकतत्तदर्थवन्नः ॥६९॥
सलिलैरतिपावनैस्तदीयैः कमलैरप्यतिसौरभैर्महेन्द्रः ।
परिपूज्य शिवौ गुरूक्तरीत्या प्रणिपातैः परितोषयाम्बभूव ॥७०॥

अपि गद्गदया प्रमोदवाष्पैरपि सारोज्झितयातिसम्भ्रमेण।
पितरौ प्रियकप्रियौ सुरेशः स गिरानर्च वचःपथव्यतीतौ ॥७१॥

भुवि सुन्दरमास्पदं तवैतच्छिवलिङ्गं तु ततोऽपि सुन्दरं ते।
अपि सुन्दरमेव सुन्दराणामभिधानं वचनामृतं त्वदीयम् ॥७२॥

समसेविषि मन्दरे हिमाद्रौ कलधौताचलकन्दरेऽपि च त्वाम्।
विदितन्तु परं न वि[१]श्वपारं किमु तत्रैवमसीति कापि शङ्का ॥७३॥

न मखैर्न जपैर्न होमदानैर्न तपोभिर्विविधैश्च लभ्यते यत्।
तदिदं तव सन्निधानभाग्यं तरुभिः कैरपि भुज्यते निरीहैः ॥७४॥

निहता दनुजा जिता त्रिलोकी त्रिदिवे चाधिकृतं ततः किमासीत्।
इह ये मृगपक्षिणो न हीमानपि नीराज्य विमोक्तुमर्हता मे ॥७५॥

अपवृज्य किमीश! साधयेयं भवदानन्दमवाप्नुयां तदाहम्।
किमितोऽप्यधिकः स यो समासावुचितः स्वाम्युपलम्भजः प्रमोदः ॥७६॥

जडमेव जगत् तव स्वमासीदजडाः केचन मादृशोऽपि जीवाः।
अतिवाङ्मनसं भवन्तमेव प्रतिपन्नास्तु वयं प्रशासितारम् ॥७७॥

वचनावसरो न लभ्यते नस्त्वयि मीनाक्षि! शिवाविनाकृतायाम्।
इति देवि! पृथक् कृतासि किञ्चित् तमिमं मा कुरु मानसेऽपराधम् ॥७८॥

गिरिराजकुमारिकामपि स्वं विपिनेष्वद्रिषु चानुवर्त्तमानाम्।
भवतीं प्रियकप्रियेऽनुरोद्धुं स्वयमध्यास्त शिवः कदम्बमूलम् ॥७९॥

जगतो जगदीश्वरस्य च श्रीर्भवती यद्यपि सर्वतोऽस्ति पूर्णा।
करुणामयमुत्सहे न हातुं तव मीनाक्षि! तथापि रूपमेतत् ॥८०॥

हरयस्त इमे महावनेऽस्मिन्नयमिन्द्रद्रु[२]रसावपीन्द्रवल्ली।
मम नामजुषः स्थिता यदेते मम सेवेयमिति प्रतीच्छ मातः! ॥८१॥

---

१. विश्वपारं सर्वोत्तीर्णं स्थानं मुक्तैकगम्यं कैलासाख्यमित्यर्थः।

२. इन्द्रद्रुः गुल्गुलुवृक्षः। इन्द्रस्य, इन्द्र इव वा द्रुः द्रुमः। नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः, इत्यमरः।

कति सन्तु न वेधसः कतीन्द्रास्तव मीनाक्षि! तरङ्गितैरपाङ्गैः।
किमधश्च्यवते मया विना द्यौः कृपणं मां घटयस्व किङ्करेषु ॥८२॥

व्यगलद् दनुजेषु मत्सरो मे विरराम त्रिदिवोपभोगरागः।
स्थगिता बहिरेव वृत्रहत्या भवतोरद्य मयि प्रसादलेशात् ॥८३॥

इति तं प्रणिपत्य संस्तुवन्तं प्रथमं भक्तिमतां पतिं सुराणाम्।
अनुगृह्य दयोर्मिलैरपाङ्गैरगदिष्टामिदमादिमौ युवानौ ॥८४॥

आद्यस्त्वमेषामसि पार्षदानां कुमारयोश्चास्यनयोस्तृतीयः।
जानीवहे ते परमां च भक्तिं विद्राविता सा तव वृत्रहत्या ॥८५॥

वासन्तिकप्रथमपर्वसु वासव! त्वमित्थं समेत्य सकलैरनुयायिवर्गैः।
आविश्वपारनगराभिमुखात्प्रयाणादभ्यर्च नौ कनकवारिरुहैरमीभिः॥८६॥

इत्युक्ते सति जगदादिदम्पतिभ्या-
मिन्द्रस्तद्गुरुरितरेऽनुयायिनश्च ।
प्रस्थानप्रणतिपरम्पराभिरेता-
वन्योन्याभ्यधिकदयामयौ वितेनुः ॥८७॥

आमन्त्र्य द्विरदेन्द्रवक्रमसकृत् सम्प्रार्थ्य नन्दीश्वरं
सम्मान्य प्रमथान् निवेद्य सकलं चण्डेश्वरं शाम्भवम्।
आशीर्भिः प्रतिनन्दितो मुनिगणैरापृच्छ्य वाचस्पतिं
दिव्येन द्विरदेन निर्मलतरो देवः प्रतस्थे पुरीम् ॥८८॥

।। इति महाकविश्रीनीलकण्ठदीक्षितप्रणीते शिवलीलार्णवे
तृतीयः सर्गः ।।३।।

●

## अथ चतुर्थः सर्गः

निवृत्ते वासवे तस्मिन् निवृत्ते चान्तरे मनोः ।
[१]इन्दाञ्चकार कोऽप्यन्यो वृन्दारकनिकेतने ॥१॥

अभ्रमातङ्गमारुह्य विभ्रमादमरेश्वरः ।
संवृतः सकलैर्देवैर्निर्जगाम पुराद् बहिः ॥२॥

सर्वासामपि सिद्धीनां दुर्वासा निधिरद्भुतः ।
समगच्छत तेनाभ्रे स हि गच्छन् यदृच्छया ॥३॥

परिपालयितुं रौद्रीं प्रतिसर्गाधिकारिताम् ।
तस्य न ज्वलति क्रोधो यस्यैका जगदाहुतिः ॥४॥

अग्न्यगारगते तस्मिन्ननाहूतागताः स्वयम् ।
सन्दर्शयन्ति स्वात्मानं देवा आवाहनक्षणे ॥५॥

नानुगच्छति तस्याग्निर्न विष्यन्दयते हविः ।
नापक्षयति सन्त्रस्तो न निर्मन्थे विलम्बते ॥६॥

अतपत्तपनाकारमज्वलज्ज्वलनोपमम् ।
दृष्ट्वैव तं मुनिं देवास्तत्रसुस्तत्र सुस्थिताः ॥७॥

पाणिभ्यामप्रमत्तोऽसौ प्रसादं पद्ममैश्वरम् ।
गजस्कन्धगतायापि ददौ राजेति वज्रिणे ॥८॥

अनादृत्य स तं मोहान्निदधे मूर्ध्नि दन्तिनः ।
शुण्डया सोऽप्युपादाय निष्पिपेष निसर्गतः ॥९॥

---

१. इन्दाञ्चकार इन्द्रत्वं प्रापेत्यर्थः। इदि परमैश्वर्ये।

आभुज्य स भ्रुवौ किञ्चिदावर्त्त्य कपिले दृशौ ।
प्रजज्वालेव कोपेन मुनिः प्रस्फुरिताधरः ॥१०॥
पस्पन्दे न सहस्रांशुस्तस्तम्भे मारुतस्तदा ।
चकम्पे सार्णवा पृथ्वी विव्यथे केवलं नभः॥११॥
स हस्तिहस्तिपकयोः शापं घोरमवासृजत् ।
वज्रं वज्रिणि दुर्वारमङ्कुशं च निरङ्कुशे ॥१२॥
मौलिं भेत्स्यति पाण्ड्योऽस्य मदान्धस्य दिवस्पतेः ।
सञ्चरत्ववनावेष कुञ्जरः क्षुद्रदन्तिवत् ॥१३॥
दत्तशापतया किञ्चिद् दग्धेन्धनमिवानलम् ।
प्रशाम्यन्तममुं[1] देवाः प्रणिपातैरसान्त्वयन् ॥१४॥
सम्भ्रमोद्वेगकार्पण्यस्तम्भप्रणतिसान्त्वनैः ।
प्रसादाभिमुखस्तेषां प्राह माहेश्वरो मुनिः ॥१५॥
पाण्ड्यो भिनत्तु तर्ह्यस्य मौलिं मकुटलक्षणम् ।
सुन्दरेशार्चनान्तश्च शापः स्वर्दन्तिनोऽस्त्विति ॥१६॥
महेन्द्रसविधावासवासनारसिकश्चिरात् ।
महेन्द्र एव शैलेन्द्रे जन्म लेभे सुरद्विषः ॥१७॥
आमूलभग्नदन्तः स खेलासु बिभिदे भुवम् ।
धर्त्तुकाम इव स्कन्धे तामेवोद्धृत्य सार्णवाम् ॥१८॥
मदगन्धेन धावन्ति येषामन्ये मतङ्गजाः ।
कर्णानिलेन ते तस्य कलभस्यापि दुद्रुवुः ॥१९॥
स सिंहान् शुण्डयादाय चिक्षेप तृणपूलवत् ।
पादैरेव महाग्राहान् भेकमर्दं ममर्द च ॥२०॥
ग्राहा ग्रसन्ते हर्यक्षा घ्नन्ति गृह्णन्ति मानवाः ।
इत्युच्यमानं कलभैराश्चर्यमिव सोऽ[2]श्रृणोत् ॥२१॥

१. 'मुनिं' इति खपुस्तके पाठः; २. 'करोत्' इति खपुस्तके पाठः।

सरित्सरांसि पीतानि सकृदाकृष्य शुण्डया ।
मदधारापदेशेन मन्ये तस्य प्रसुस्त्रुवुः ॥२२॥

स मत्तः सञ्चरन् पृथ्वीं चरणैरपचस्करे[१] ।
लघूकरिष्यन्निव तां दिग्गजानुजिघृक्षया ॥२३॥

अजानिव गजानन्यानादायादाय चिक्षिपे ।
स एव पुङ्गजस्तत्र वशास्तस्याभवन् परे ॥२४॥

स खेलन् सागरस्याम्भः क्षिपन् मन्दाकिनीं प्रति ।
दयया चिरविश्लिष्टौ दम्पती तावयोजयत् ॥२५॥

पश्यन् मध्यमलोकस्य रामणीयकमद्भुतम् ।
पांसुभिः स करोद्धूतैश्चकारेव दिवं भुवम् ॥२६॥

विद्रवद्भिर्वने[२] तस्मिन् व्याधव्याघ्रमृगाधिपैः ।
मृगाणां रक्षणादासीन्मृगेन्द्रः सोऽद्भुतः क्षितौ ॥२७॥

महेन्द्रादेष मलयं मलयादपि दर्दरम्[३] ।
सञ्चरन् जातुचित् प्राप कुञ्जरो नीपकाननम् ॥२८॥

मदगन्धाशया प्राप्तैर्मधुपैर्विपिनात् ततः ।
सम्प्रदर्शितवर्त्मेव स ययौ हेमपद्मिनीम् ॥२९॥

गणेशमदनिष्यन्दगन्धसर्वस्ववेदिनः ।
उपेक्षां भ्रमराश्चक्रुरुन्मदास्तन्मदाम्भसि ॥३०॥

स पतन्नेव सरसि क्षीरोद इव मन्दरः ।
कल्लोलैः प्लावयामास कदम्बविपिनान्तरम् ॥३१॥

मलिनो निर्ममज्जास्मिन्नुन्ममज्जाथ निर्मलः ।
प्रागभूत् केवलो भौमः सार्वभौमोऽथ दन्तिनाम् ॥३२॥

---

१. अपचस्करे आलिलेख; २. 'वनादस्माद्' इति खपुस्तके पाठः।

३. दर्दुरस्तोयदे भेकें वाद्यभाण्डाद्रिभेदयोः। दर्दुरी चण्डिकायां स्याद् ग्रामजाले नपुंसकम्॥
(मेदिनी. १३४-१६७)

उत्तीर्य बहिरन्तश्च नीरजा नीरजाकरात्।
अतीयाय स तं शापमधीयाय[१] मुनेर्गिरः ॥३३॥
गाङ्गेयैः शैवगाङ्गेयैः[२] कमलैः कमलास्पदैः।
एकदन्तं चतुर्दन्तः सिन्धुरं सिन्धुरोऽर्चयत् ॥३४॥
[३]पुष्करैरभिषिच्येशौ पुष्करोपहृतैरयम्।
पुष्करैरेव चानर्च पुष्करं गाहितुं पुनः ॥३५॥
सितं हि काञ्चनं[४] पुष्पं शिवस्यैवाभवन्मुदे।
पिशङ्गं तु तदानीतं प्रीतये शिवयोरभूत् ॥३६॥
मुक्तशापो गजः पृथ्वीं मुदा यदपचस्करे।
गजतीर्थमिति ख्यातं तद् बभूव महत् सरः ॥३७॥
ऐरावतेश्वरं लिङ्गमैरावतविनायकम्।
स तीरे सरसस्तस्य स्थापयित्वाभ्यपूजयत् ॥३८॥
पुरन्दरेश्वरं नाम पूर्वतः सुन्दरेशितुः।
स्वामिनामाङ्कितं लिङ्गं स्थापयामास चापरम् ॥३९॥
प्रहितः सुन्दरेशेन स हि तत्र चिरं वसन्।
पुनर्जगाम स्वं धाम पुरुहूतेन चादृतः ॥४०॥
कदम्बविपिनात् प्राचि कल्याणनगरे ततः।
कालेन महता जज्ञे कश्चिद्वैश्यो धनञ्जयः ॥४१॥
अस्त्राय गत्वा देवेन कृतयुद्धं गतस्पृहः।
[५]कौरव्यमत्यशेतायमूरव्यस्तु धनञ्जयः ॥४२॥

---

१. अधीयाय सस्मार।

२. शैवगाङ्गेयैः शिवगङ्गासम्बन्धिभिः।

३. चतुर्णां पुष्करपदानां जलशुण्डापद्मव्योमानि क्रमेणार्थाः।

४. उन्मत्ताख्यम्।

५. कौरव्यं कुरुवंश्यं धनञ्जयमर्जुनापरपर्यायम्।

तस्य भूमिस्पृशो [१]भक्तिं तरुणेन्दुशिखामणौ।
भक्तिरागन्तुकान्येषां कथं वानुकरिष्यति ॥४३॥

( [२]दशैकादशिकाः? ) प्रायो वणिजश्चतुरा अपि।
एकं दत्वेह सोऽमुत्र तत्सहस्रमुपार्जयत् ॥४४॥

परक्षेत्रपरामर्शपरिशङ्की धनञ्जयः।
नोत्ससर्ज बहिर्जातु स [३]गोषड्गवमात्मनः॥४५॥

वृत्तिः सा हि विशां यत्तु भुवमुल्लिख्य जीवनम्।
स तु तत् कर्म तत्याज दिवमुल्लिख्य[४] केवलाम् ॥४६॥

अक्रीणीतैव पुण्यानि व्यक्रीणीत न जात्वपि।
समयेषूपयोगाय [५]सर्वमेव जुगोप सः॥४७॥

स बहून् विषयान् गत्वा वाणिज्याय धनञ्जयः।
निवृत्तो नीपकान्तारसमीपं सायमाययौ ॥४८॥

अदृश्यत सहस्रांशुरस्तभूधरमस्तके।
मन्देहयुद्धलब्धासृक्पङ्कदिग्ध इवारुणः॥४९॥

अर्कमस्तं गमिष्यन्तमुपेत्यानुचराः कराः।
अन्वगन्वगलम्बन्त दुद्रुवुर्ये पुरः पुरः॥५०॥

निन्दन्तो रजनीं कोका नन्दन्तस्तां चकोरिकाः।
[६]चञ्चूचञ्चवि सायाह्ने सर्वतः सम्प्रजह्निरे ॥५१॥

---

१. भक्तिं भूमिस्पृश इति विशेषणादाजन्मसिद्धां भक्तिमित्यर्थः।

२. 'दशकाः शतिकाः' इति पाठो भवेत्। दशैभ्यो वृद्धिरायो लाभो वा दीयते दशका दशवृद्ध्याद्युपार्जका इत्यर्थः। एवं शतिकाः शतवृद्ध्याद्युपार्जकाः। दशशतशब्दाभ्यां 'चतुर्थ्यर्थ उपसङ्ख्यानम्' (५-१-४७) इति चतुर्थ्यर्थे कन्ठनौ।

३. गोषड्गवमिन्द्रियषट्कम् अथ च पशुषट्कम्। गोशब्दात् 'षट्त्वे षड्गवच्'।

४. उल्लिख्याभिसन्धाय।

५. 'सङ्गृह्यैव' इति खपुस्तके पाठः।

६. चञ्चूचञ्चवीति। 'तत्र तेनेदमिति सरूपे' (पा.सू. २-२-२७) इति बहुव्रीहिः।

प्रचुक्रुशुर्द्विजाः केचिदपरे मौनमास्थिताः।
असङ्ख्यातो द्विजानामित्यासीत् तथ्यं तदा वचः॥५२॥
प्रतीच्यां ददृशे रागः स स्थास्यति कियच्चिरम्।
प्राच्यां दृष्टचरो ह्येष भास्वतो भ्राम्यतः सदा॥५३॥
प्रनष्टे महसां राशौ प्रादुर्भूतं हि तारकैः।
तमसाभ्यावृते लोके तावद्भिरपि किं कृतम्॥५४॥
त एव भानवो भानोस्तारकावपुषा स्थिताः।
तथाप्येकः स नास्तीति तमांसि विजजृम्भिरे॥५५॥
प्रायो जात्यनुरोधाय पद्ममात्रे निमीलति।
भानुहस्तगतेनापि पङ्कजेन निमीलितम्॥५६॥
तथा सान्द्रीभवन्ति स्म तमांसि हरितां मुखे।
व्याप्नुवन्ति हि तान्येव विहन्यन्ते यथा मिथः॥५७॥
शैवलोत्पलभृङ्गाणां सरसीषु निशामुखे।
स्पर्शसौरभकूजाभिः स्वं स्वं रूपमबुध्यत॥५८॥
निष्पपातेव गगनं निस्ससारेव सागरः।
आववारेव निश्शेषमविद्या महती तदा॥५९॥
अयश्शृङ्खलवत् क्रष्टुमाहर्त्तुं तृणपूलवत्।
आश्यानपङ्कवच्छेत्तुमासीच्छक्यं तदा तमः॥६०॥
अनिस्तार्येण मनसाप्यनाव्येन[१] च रंहसा।
स्त्रोतसेवान्धकारस्य स निन्ये नीपकाननम्॥६१॥
सोमवारोपवासेन सोऽध्वखेदेन तावता।
विप्रयोगेण सार्थाच्च विव्यथे केवलं तदा॥६२॥
नोन्नतानि न निम्नानि न नम्रा न च पादपाः।
सर्वमेकमभात् तस्य सान्निध्यादिव शाम्भवात्॥६३॥

---

१. 'नाति' इति खपुस्तके पाठः।

अश्रौषीदश्रुतचरममृतस्येव निर्झरम्।
गानमातोद्यसम्भिन्नं गन्धर्वाणामदूरतः॥६४॥
स तच्छब्दानुसारेण सम्प्रसर्पञ्छनैः शनैः।
दयया देवदेवस्य दिव्यं चक्षुरधारयत्॥६५॥
स दिव्यलिङ्गमभितः सन्ददर्श सुरानृषीन्।
ध्यायतो गायतः सामान्यर्चतश्चाभिषिञ्चतः॥६६॥
ननृतुः प्रमथाः क्वापि जगुः सामानि सामगाः।
ननृतुर्देवसुदृशो जगुरन्यत्र किन्नराः॥६७॥
कमलैः कनकाब्जिन्या विमलैरुभयैरपि।
स सुरैः सार्धमानर्च शर्वाणीचन्द्रशेखरौ॥६८॥
प्रभातायां च शर्वर्यां प्रवृत्ते जनचङ्क्रमे।
स यत्रैक्षिष्ट देवर्षींस्तत्रैक्षिष्ट तरून् मृगान्॥६९॥
स तु तेनाद्भुतेनैव निर्वृत्तामृतपारणः।
व्रताङ्गं पारणां कर्त्तुं प्राप नेदीयसीं पुरीम्॥७०॥
द्रमिडान्वयमूर्धन्यो द्वितीय इव वासवः।
प्रशशास महीं यत्र पार्थिवः कुलशेखरः॥७१॥
सङ्गम्य बन्धुभिः सार्धं विश्रम्य च यथासुखम्।
वृत्तं विज्ञापयामास राज्ञे सर्वं स्वमद्भुतम्॥७२॥
स जातु पुरुषं कञ्चिच्चन्द्रचूडजटाधरम्।
निद्राणोऽन्तर्दृशाद्राक्षीन्नृपतिः कुलशेखरः॥७३॥
नन्वस्ति नगरादस्मात् पश्चिमं नीपकाननम्।
वन्यैर्मृगगणैः सार्धं वसामोऽत्र चिरं वयम्॥७४॥
तद्वनं नगरीकृत्य तदेवाधिवसन् स्वयम्।
कुलमुद्धृत्य वत्स! त्वं कुरु नामेदमर्थवत्॥७५॥

इत्युक्त्वान्तर्हिते तस्मिन्निन्दुचूडे दयानिधौ ।
प्रत्यबुध्यत संहृष्टः प्रत्यूषे कुलशेखरः॥७६॥
अद्भुतं स्वप्नवृत्तान्तमाप्तेषु च महत्सु च ।
आवेदयन् नृपः प्रातरभ्यनन्द्यत तैरपि ॥७७॥
निश्चित्यानुग्रहं शम्भोर्निर्मित्सुर्विपिनं पुरम् ।
सम्प्रतस्थे महीपालः सावरोधः सबान्धवः॥७८॥
प्रस्थितस्याग्रतो वामं प्रवृत्तस्तस्य खञ्जनः।
कटाक्ष इव मीनाक्ष्या कलयन् भावि मङ्गलम् ॥७९॥
स कदम्बवनं प्राप्य सन्ददर्श महाद्भुतम् ।
हैमप्राकारसम्बाधमैन्द्रं धाम महेशितुः॥८०॥
स दृष्ट्वा साम्बमीशानं सम्प्रार्थ्य च गणाधिपम् ।
न्ययुङ्क्त शिल्पिनो दक्षान्निर्मित्सुर्नगरं नृपः॥८१॥
सर्वे ते विश्वकर्माणः सर्वे कुशलतामयाः।
समेत्य मन्त्रयाञ्चक्रुः शिल्पिनः पुरकर्मणि ॥८२॥
स्वस्तिकं सर्वतोभद्रं मण्डलं दीर्घवृत्तकम् ।
निर्मित्समाना नगरं ते विप्रावादिषुर्मिथः॥८३॥
शिल्पिष्वेक इवागत्य सिद्धः स्वप्नेक्षितः पुरः।
इतिकर्त्तव्यतां तेषामुपादिक्षत् प्रभोः पुरः॥८४॥
स्वप्नदर्शनसंवादि तद्रूपं तस्य चिन्तयन् ।
यावद् ददर्श नृपतिस्तावदन्तरधत्त सः ॥८५॥
पश्यन्ननुग्रहं शम्भोः स्वप्नजागरयोः समम् ।
उत्सेहे स तु भूयोऽपि पार्थिवः पुरकर्मणि ॥८६॥
अपि तद्विपिनं सान्द्रमज्ञातालोकसङ्कथम् ।
शासनात् पाण्ड्यनृपतेर्जातं [१]जाङ्गलवत् क्षणात् ॥८७॥

---

१. जाङ्गलवत् तरुशून्यप्रदेशवत्।

हालास्यनाथान्तिकमभ्युपेत्यसम्पश्य पाणिग्रहसाक्षिणो मे।
इति त्वमाकर्ष बलात् सपत्नीमित्याह तां व्योमगिरा महेशः॥४६॥
सा प्रेयसा बन्धुजनैश्च साकं तामानयन्ती प्रसभं सपत्नीम्।
यावच्छिवस्यान्तिकमेति तावत् तत्र स्वयं तत् त्रयमाविरासीत्॥४७॥
इमे समेताः सदनं पुरारेरीशानकोणेऽस्य कदाप्यदृष्टम्।
अन्धुं शमीवृक्षमनाथबन्धुं लिङ्गं च दृष्ट्वा विभयाम्बभूवुः॥४८॥
भोगाङ्गपूजावसरे पुरारेः समागतास्तत्र सुराः समस्ताः।
आलोक्य लीलायितमद्भुतं तद् भक्त्या नतास्तुष्टुवुरिन्दुचूडम्॥४९॥
क्व ते दया वाङ्मनसातिभूमिः क्व दुर्लभो वा त्वदवाप्त्युपायः[१]।
अहो जितं सुन्दरनाथ! मर्त्यैरहो जितं तत्र च दीनदीनैः॥५०॥
गुप्तं वृथा कोटिभिरागमानां गुप्तं वृथाहो गुरुभिः पुराणैः।
कोणे यदत्र त्वमिहानुकम्पाकोशालयद्वारमपावृणोषि॥५१॥
अस्माभिरज्ञानपि तारयद्भिः कियान् प्रकर्षो विबुधेषु कार्यः।
इति त्वया चिन्तयता किमीश! प्रतारिता स्मस्त्रिदिवार्पणेन॥५२॥
पाण्ड्यप्रियं त्वां विदती शिवापि पाण्ड्यात्मजासीद्यदि का कथा नः।
पाण्ड्येषु जायेमहि खञ्जरीटाः कोयष्टयः कोलकिशोरका वा॥५३॥
लीलासु ते लब्धसरूपभावा ग्राम्या इमे पाण्डुषु चन्द्रमौले!।
जिघ्रन्ति केचिद् विलिखन्ति केचिच्चर्वन्ति केचिच्च वतंसमिन्दुम्॥५४॥
त्वं तावदत्यन्तमृदुः प्रजासु त्वत्तोऽपि मृद्वी गृहिणी तवेयम्।
अद्यायतौ वा चरतोः किलैवमात्मैकशेषो भविता ध्रुवं वाम्॥५५॥
कैवल्यदानाय कृतप्रतिज्ञौ काशीपतिः[२] पाण्ड्यपतिर्युवां द्वौ।
शिष्यैकविश्रान्तममुष्य दानं सार्वत्रिकं तारकमेव शम्भो!॥५६॥
विश्वस्य दीर्घां श्रवणादिभङ्गीं वीतोद्यमाः स्मश्चिरमीश! मोक्षे।
सम्प्रत्यवाबुद्ध्यत वाक्यशेषपञ्चाक्षरीयं मधुरा विनेति॥५७॥

---

१. 'तद' इति खपुस्तके पाठः; २. काशीपतिर्विश्वेश्वरः।

ये ये जना यद्यदिहार्थयन्ते तत्तन्निरस्तोपधि तेषु तेषु।
ओमित्यलोभादनुजानतः किमोमित्यभिख्यैव तवेयमासीत् ॥५८॥
अन्वेषणीयं किमनाहते ते तत्त्वं हताः स्मो वयमागमौघैः।
विस्पष्टमत्राहत एव तत्त्वं वेत्रेण पाण्ड्यस्य यदीक्षितं तत् ॥५९॥
स्वरूपमेतत् तव सुन्दरेश! शुद्धा दयेत्येव तु लक्षयामः।
कदम्बमूलन्तु तटस्थलक्ष्म कारुण्यसिन्धो! तव तर्कयामः॥६०॥
यद्धामसीमाक्रममात्र एव वृत्रद्रुहस्तत् कलुषं विलिल्ये।
सकृद् विगाह्यैव यदीयतीर्थे शापं मुनेरिन्द्रगजो मुमोच ॥६१॥
नीपाटवीं यः कुलशेखरेण निर्मापयामास च राजधानीम्।
प्राप्ता शिवा पाण्ड्यकुलेऽवतारमनुज्ञया यस्य तटातकेति ॥६२॥
उपायत स्वं युधि जेतुकामामुपायतस्तामपि लीलया यः।
पतञ्जलेर्भक्तिमवेत्य नृत्तं प्रादर्शयद् रूप्यसभान्तरे यः॥६३॥
कुण्डोदरस्योदरपूरणेऽपि कुण्ठोद्यमा येन कृतान्नपूर्णा।
नालं पिपासोपशमाय यस्य नदी च सा वेगवती यतोऽभूत् ॥६४॥
समाहृताः काञ्चनमालिकायाः स्नानाय ये नाम्बुधयः समस्ताः।
महीपतिं यो मलयध्वजं च दिवं गतं दर्शयति स्म पत्नीम् ॥६५॥
मीनेक्षणायां सुतमुग्रपाण्ड्यमवाप यः सुन्दरपाण्ड्यदेवः।
तस्मै च यं शक्तिधराय वज्रं चण्डायुधं चक्रमपि व्यतारीत् ॥६६॥
उद्वेलमप्यर्णवमुग्रपाण्ड्यो यद्दत्तया शोषयति स्म शक्त्या।
वज्रेण मौलिं बिभिदे मघोनश्चण्डायुधेनापि जघान मेरुम् ॥६७॥
आचष्ट यश्चाशयमागमानां जिज्ञासमानेषु तपोधनेषु।
यद्दत्तरत्नाहितमौलिनैव पाण्ड्यार्भको राजपदेऽभिषिक्तः॥६८॥
कपर्दजैर्यस्य घनाघनौघैः पपे पयोधिः परिजृम्भमाणः।
प्राप्तैश्च तैर्यः पटमण्डपत्वमवारयद् वृष्टिमतिप्रवृद्धाम् ॥६९॥

सिद्धात्मना यो विततार सर्वाः सिद्धीः प्रजानां मधुरानगर्याम्।
यः सुन्दरेशानविमानसक्तं शिलागजञ्चाशयदिक्षुकाण्डान् ॥७०॥
अस्त्रेण तुर्यावतरेण शौरेर्हस्ती हतो येन तथागतानाम्।
श्वश्रूदुरालापरिवासिताया यः प्रादुरासीद् द्विजकन्यकायाः॥७१॥
व्यत्यस्य नृत्तं विदधे दयालुः पाण्ड्यस्य यः प्रार्थनया महत्या।
पान्थद्विजस्त्रीवधपापवादं व्याजेन यो व्याधवटोरहार्षीत् ॥७२॥
स्वमातृजारं पितृघातिनं च विप्राधमं यो विमलीचकार।
अङ्कस्य भार्याहरमस्त्रशिष्यमङ्कात्मनैवाजयदाहवे यः॥७३॥
मायोरगं यः शमयाम्बभूव मायागवीं यस्य पुनर्महोक्षः।
यः पाण्ड्यसेनान्यमनुग्रहीतुं सन्दर्शयामास चमूं नृपालम् ॥७४॥
पाण्ड्याय यः प्रादित हेम यश्च वैश्याङ्गनाभ्यो वलयान् दयार्द्रः।
अष्टापि सिद्धीः प्रतिपादयन् यो यक्षाङ्गनासु प्रससाद भूयः॥७५॥
द्वारं समुद्घाट्य निशि स्वयं यश्चोलाय सेवामदिशन्निगूढम्।
पानीयदानेन च पाण्ड्यसेनामुज्जीव्य चोलेन्द्रमजापयद् यः॥७६॥
स्वर्णं दिशन् सिद्धरसं प्रयुज्य पुपोष वेश्यां शिवधर्मिणीं यः।
पाण्ड्यस्य यः स्वैकपरायणस्य सादी भवन् साधयति स्म चोलम् ॥७७॥
अक्षय्यमप्यक्षतमर्पयन् यो भक्ताय भक्तार्पणमन्वगृह्णात्।
येनादृतो मातुलरूपभाजा वैश्यो वटुर्ज्ञातिजनान् विजिग्ये ॥७८॥
आस्थाय यश्चार्जुननाथलिङ्गं पाण्ड्ये महत् पातकमुन्ममार्ज।
काष्ठानि मूर्ध्ना कलयन् न्यधत्त काष्ठां परां गायति यः स्वभक्ते ॥७९॥
भद्राय भूरि द्रविणं दिदेश पुत्रं ददौ चेरमहीभुजे यः।
भद्राय दिव्यं फलकं दिदेश वृष्टौ महत्यामपि गायते यः॥८०॥
द्वीपान्तरीयामवमापि गीत्या भद्रा विजिग्ये यदनुग्रहेण।
वाराहमास्थाय वपुर्ददौ यः स्तन्यामृतं कोलकिशोरकाणाम् ॥८१॥

प्रापय्य मानुष्यकमद्भुतं यः पाण्ड्यस्य तान् मन्त्रिपदेऽभ्यषिञ्चत् ।
यः खञ्जरीटं शरणं प्रपन्नं चक्रे बलिभ्यो बलिनं खगेभ्यः ॥८२॥
जहार कोयष्टिमनुग्रहीतुं यादांसि यः काञ्चनपङ्कजिन्याः ।
कल्पान्तलुप्तां कटकाहिना यः सीमां विवव्रे मधुरानगर्याः ॥८३॥
प्राद्रावयत् पाण्ड्यकृतेऽरिसेनां बाणैः स्वनामाक्षरलाञ्छितैर्यः ।
दुरासदं दुष्कविभिः स्वयं यः प्रादाद् विचित्रं फलकं कवीनाम् ॥८४॥
पाण्ड्यस्य चिन्तानुगुणं निबध्य पद्यं ददौ यश्च निजार्चकाय ।
विद्याविवादे विहितातिवादं कीरं कविं यः पुनरन्वगृह्णात् ॥८५॥
अपि स्वयं कुम्भभवेन यस्तमबोधयद् द्रामिडसूत्रतत्त्वम् ।
व्यवेचयन्मूकमुखेन यश्च तत्तत्कृता द्रामिडसूत्रवृत्तीः ॥८६॥
भक्ते कवौ क्वापि विमाननेन पाण्ड्याय कुप्यन्नगराद्ययौ यः ।
दाशो भवन् दाशकुलेऽवतीर्णां जग्राह पाणौ जगदाम्बिकां यः ॥८७॥
आचार्यमूर्त्तिं परिगृह्य नम्रमदीक्षयद् वातपुरीश्वरं यः ।
अदर्शयद् यस्तुरगान् सृगालानभ्यर्थितो वातपुरीश्वरेण ॥८८॥
प्रावर्त्तयद् वेगवतीमथैनं पाण्ड्येन यः पालयितुं निरुद्धम् ।
विश्वात्मता यो विशदीचकार वेत्राहतिं स्वां भुवने विवृण्वन् ॥८९॥
सम्बन्धनाथस्य मुखादकार्षीच्छान्तं ज्वरं पाण्ड्यमहीपतेर्यः ।
विद्याविवादे विजिताननेन यः शूलमारोपयति स्म बौद्धान् ॥९०॥
आनीय यः कूपशमीमहेशान् वैश्याविवाहे विववार साक्ष्यम् ।
लीलास्वनन्तास्वपि यस्य दृष्टा लीला चतुष्षष्टिरियं पुराणे ॥९१॥
आलम्बमेकं जगतां त्रयाणामव्याजकारुण्यसुधानिधानम् ।
तं तादृशं त्वामपहाय शम्भो! किं तावदन्यैरिह किम्पचानैः ॥९२॥
इति स्तवोक्त्या मुदितः सुराणामीशः स वेश्यां सह वल्लभेन ।
निर्विष्टभोगामवनौ चिराय निन्ये परं धाम दयार्द्रचेताः ॥९३॥
इत्थं समस्तार्त्तिहरः प्रजानामीशः कदम्बद्रुममूलधामा ।
आस्ते त्रिलोकीमनुकम्पमानः साचिव्यतो मीनविलोचनायाः ॥९४॥

श्रोतव्यं निधिरस्ति कोऽपि निहितो हालास्य इत्यग्रतो
मन्तव्यं स निधिर्जगन्निधिरिति न्यायैरथोच्चावचैः।
ध्यातव्यं हृदि मूललिङ्गमथ च श्रीसुन्दरेशाभिधं
द्रष्टव्यं शफरेक्षणासहचरं तत्त्वं ततः शाङ्करम् ॥९५॥

[१]लीलां चतुष्षष्टिमिमां प्रणीतां हालास्यनेतुस्तरुणेन्दुमौलेः।
श्रीनीलकण्ठे मयि कर्णजाहमानीय [२]मीनाक्षि! चिरं दयेथाः॥९६॥

कृतिः समर्प्या विरसा मयेति कस्यैष दोषः स परं भवान्याः।
रम्यां कृतिं सा यदि रोचयेत तथानुगृह्णातु निवारितं कैः॥९७॥

मा भूवन् नव च रसाः कविप्रणीताः
काव्येऽस्मिन् पदकमलार्पिते पुरारेः।
आस्ते तु ध्रुवमखिलाभिनन्दनीयांस
कारुण्यामृतरसकन्दली जनन्याः॥९८॥

हालास्येशितुरीशितुर्यदि सखे! लीलासु शुश्रूषसे
तत्सर्वागमगुप्तमस्य यदि वा तत्त्वं विजिज्ञाससे ।
पारं वाथ दिदृक्षसे यदि परं काव्यागमस्त्रोतसां
तत्कर्णे कुरु नीलकण्ठमखिनो वाचं शिवैकाश्रयाम् ॥९९॥

मलयध्वजपाण्ड्यकन्यकाचरणद्वन्द्वनिवेशितात्मना ।
शिवयोः कविनेदमार्पितं शिवलीलार्णवकाव्यमद्भुतम् ॥१००॥

।। इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्य-चतुरधिकशतप्रबन्धनिर्वाहकश्रीमन्महाव्रतयोजिश्रीमदप्पयदीक्षितसोदर्याच्चान्दीक्षितपौत्रेण नारायणदीक्षितात्मजेन भूमिदेवीगर्भसम्भवेन महाकविश्रीनीलकण्ठदीक्षितेन विरचिते शिवलीलार्णवे महाकाव्ये द्वाविंशः सर्गः।।२२।।

।। सम्पूर्णश्चायं शिवलीलार्णवः।।

●

---

१. 'लीलाचतुष्षष्टि' इति पाठः स्यात्।

२. इतः प्रभृति ९८ तमश्लोकप्रथमपादावधिकानि अक्षराणि त्रुटितानि खपुस्तके।

## परिशिष्टम्- १

# शिवलीलार्णवे प्रयुक्तसुभाषितरत्नकोशः

| | |
|---|---|
| अपत्यलाभेऽपि समे विदग्धा रूपोत्तरामेव हि रोचयन्ते। | (१।२३) |
| अयोग्यानां हि काव्यानामग्निसेकादिवाक्यवत्। | (२०।१२) |
| अहिरेव हि वेत्त्यहेः पदं कथमन्येन घटेत तज्जयः। | (१५।८४) |
| अहो सतां प्रकृतिरपत्रपिष्णुता | (१९।२३) |
| कविपाशः किमुपैति मुकताम्। | (१५।१४) |
| काल एव विजयस्य कारणम्। | (१०।१०१) |
| किमप्यदेयं ददृशेऽस्य न प्रभोः। | (५।५०) |
| गर्भोद्भवादिः प्रसवावसानं क्लेशो हि दुष्पुत्रसुवां च तुल्यः। | (१।४८) |
| जगत्तटस्था इव राज्ञि बालिशे जनाः स्वमर्थं घटयन्त्यसाधवः। | (५।१७) |
| जयः कथं जगदुपतापिनो भवेत्। | (१९।६२) |
| तत्त्वतो हि कुसुमानि सायकानैक्षवं च धनुराहुरागमाः। | (१०।९२) |
| तथा हि भक्तिस्तपसापि दुर्लभा। | (१६।२१) |
| तरुणानामपराधभिरुता। | (१५।७) |
| तरुण्याः सत्यं मुनीनामपि मोहहेतुः। | (२०।३६) |
| दुरुत्तरो दुर्जनसम्प्रयोगः। | (२२।२) |
| द्विजो ह्ययं विबुधगणेषु गीयते। | (१९।३५) |
| न जातु भिन्दन्ति रहस्स्थितिं खलाः। | (५।१८) |
| न दुर्लभा तस्य कदापि वश्यता सुदुर्लभा तु स्थिरशीलतैव न। | (१६।२२) |
| न हीश्वराः पर्यनुयोज्यशीलाः। | (२।२३) |
| नापरोऽस्ति चतुरो महेश्वरान्नादतत्त्वमवबुध्य नन्दितुम्। | (१०।६७) |
| नासाग्रलग्नेन भवन्मुखश्रीस्ताटङ्कबिम्बेन किमङ्गनायाः। | (१।३४) |
| पशुर्हि नः पुच्छविषाणवर्जितः। | (११।५२) |

प्रकृतिर्ह्यपथे रुचि: प्रजानां किमुत स्वामिनि तादृशेऽपि लब्धे। (३।७)

प्रकृतीनां प्रभवत्स्वयं स्वभाव:। (३।१२)

प्रभुता का प्रकृतेरसम्मतस्य। (३।२८)

प्रवर्त्तयन्त्यप्यपथे शनै: प्रभुं खला: स्वकार्यैकपरा: समीपगा:। (५।१५)

प्रायेणायं पामराणां स्वभाव:। (१३।६१)

महतामेव मनोरथोऽपि तावान्। (३।४५)

मातृहस्तगलिता हि मार्गणा: कस्य मर्मणि निवेष्टुमीशते। (१०।९०)

यदि मनो विजितं विजितं जगत्। (२१।४२)

वदान्यतावासनयेव सुभ्रुव:। (११।६७)

विपदन्यव्यसनार्थिनां पुर:। (१५।१२)

विविधेषु चेदियं दशा मतिभेदो मनुजेषु नाद्भुत:। (१५।५)

विरमति जलदेऽपि कस्य हानि: परमिह केचन चातका: प्रनष्टा:। (७।७४)

रत्नापगा यत्र तु सम्पतन्ती रत्नाकरत्वं रमणस्य दत्ते। (२।१७)

शृङ्गारसारं कलयापि वेधा: किं वेद वेदाक्षरजीर्णकेश:। (२०।३९)

समयानुगुणैव शत्रुता सखिता वा त्रिदिवौकसामपि। (१५।२८)

सर्व एव शुभ: काल: स्वरूपं यदि सुन्दरम्। (४।९३)

सुखेन दोषं द्रढयन्ति साधुषु स्तुवन्त एवं स्वगिरा दुराशया:। (५।१६)

सुदुर्लभा तु स्थिरशीलतैव न:। (१६।२२)

स्मरन्ति शिष्टा: स्वयमाचरन्ति च। (५।७१)

स्वर्गेऽपि गत्वाप्सरसां निवासे काणैव किं क्वापि गवेषणीया। (१।३९)

स्ववैमत्येन वैमत्यं शास्त्राणां बालिशा जगु:। (१४।४६)

•

## परिशिष्टम्- २

# शिवलीलार्णवे

## प्रयुक्तविशिष्टशब्दरत्नानुक्रमकोशः

परिशिष्टम्- ३

# शिवलीलार्णवे प्रयुक्तवृत्तरत्नकोशः

अयि साहित्यपाथोनिधिमन्थनोत्थामृतपिपासवः अविरतछन्दसार्णवालोडनतत्पराः सहृदयसुधयः, विदाङ्कुर्वन्तु भवन्तः 'छन्दः पादौ तु वेदस्य'। पादेन खञ्जः मानवः यथा गमनेऽसमर्थस्तथैव छन्दः विना वेदस्योच्चारणस्य गतिः लयश्च दुष्यति। अत एव छन्दः वेदस्य पादौ कथितौ, तद्यथा—

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ कथ्यते।**
**ज्योतिषामयनं नेत्रं निरुक्तं श्रोत्रमुच्यते।।**

**शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते।।** इति।

लौकिकसाहित्येऽपि छन्दसां प्रयोगः दृश्यते कण्ठस्थीकरणे सुकरत्वात् गेयत्वाच्च। तस्मादत्र काव्ये प्रयुक्तानां छन्दसां निर्धारणविधिरुपस्थाप्यते।

मात्रावर्णविभेदेन लौकिकं छन्दः द्विविधो भवति। यत्र मात्रायाः गणना भवति तन्मात्रिकं वर्णानां गणनया वार्णिकं छन्दः कथ्यते।

छन्दःगणनाक्रमे लघुवर्णानामेकमात्रा गुरुवर्णानाञ्च मात्राद्वयं मन्यते। तत्र के लघुगुरवः इति जिज्ञासायां कथ्यते—

**सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः।**
**वा पादान्ते त्वसौ ग्वक्रो ज्ञेयोऽन्ये मात्रिको लघुः।।**

अनुस्वारयुक्तः (अं,कं) विसर्गान्तः (गः.पः) दीर्घः (चा, टी, चू) यस्याग्रे संयुक्ताक्षरः, लक्ष्मी इत्यत्र ल गुरुः भवति। लघ्वपि पादान्तगो वर्णः विकल्पेन गुरुः भवति। अन्ये एकमात्रिकाः वर्णाः लघवः भवन्ति। गुरोः सङ्केतः (ऽ) लघोश्च (।) भवति।

छन्दसां ज्ञानाय गणानां ज्ञानमावश्यकम्। अष्टौ गणा तत्र भवन्ति ते च त्र्यक्षराः भवन्ति। तदर्थं सूत्रमभिधीयते—

।ऽऽऽ।ऽ।।।ऽ

**यमाताराजभानसलगा**

सूत्रानुसारं गणानां नामानि तेषां प्रस्तारो यथा—

| | | | | | |
|---|---|---|---|---|---|
| यगणः | — | ।ऽऽ | जगणः | — | ।ऽ। |
| मगणः | — | ऽऽऽ | भगणः | — | ऽ।। |
| तगणः | — | ऽऽ। | नगणः | — | ।।। |
| रगणः | — | ऽ।ऽ | सगणः | — | ।।ऽ |

एतेषां क्रमनियमश्च प्रस्तारे प्रकटीभविष्यति। अन्यत्रापि मादीनां गणानां स्वरूपमुक्तम्। यथा—

**मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः।**
**जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः।।**

मः = मगणः त्रिगुरुः (ऽऽऽ), नकारः = नगणः त्रिलघुः (।।।), भ = भगणः आदिगुरुः (ऽ।।), पुनः यः = यगणः आदिलघुः (।ऽऽ) जः = जगणः गुरुमध्यगतः (।ऽ।), र = रगणः लमध्यः (ऽ।ऽ), स = सगणः अन्तगुरुः (।।ऽ) तः = तगणः अन्तलघुः (ऽऽ।) कथितः विज्ञैरिति शेषः।

सम्प्रति श्रीनीलकण्ठदीक्षितप्रणीते शिवलीलार्णवे महाकाव्ये प्रयुक्तानां छन्दसां निर्णयः प्रस्तूयते। 'एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः', (सा. दा. ६. ३२० पूर्वार्द्धः) इति महाकाव्यस्य वृत्तसम्बन्धिनियमं निभालयतामुना महाकविना सर्गबन्धं चकार।

**तत्र प्रथमसर्गे**

आदितोऽसीतितमं श्लोकं यावदिन्द्रवज्रानाम्नः छन्दसः प्रयोगो विहितः। तत्र इन्द्रवज्रायाः लक्षणं वृत्तरत्नाकरे—

**स्यादिन्द्रवज्रा यदि तौ जगौ गः।** (३. २८)

प्रत्येकस्मिन् छन्दसि चत्वारः पादाः भवन्ति। इन्द्रवज्राया: प्रत्येकस्मिन् पादे एकादशः वर्णाः भवन्ति। छन्दस्यस्मिन् पादान्ते यतिः विश्रामो भवति। तगण-तगण-जगणैर्गुरुभ्यां चेन्द्रवज्रा नाम छन्दः। इन्द्रवज्रायाः लक्षणं घटयन्तु तावत् शिवलीलार्णवस्य प्रथमसर्गस्य प्रथमे श्लोके—

तगणः तगणः जगणः गुरू
ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ
पूतं स्वतः पूततरं ततो यद्

तगणः तगणः जगणः गुरू
ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ
गाङ्गं पयः शङ्करमौलिसङ्गात्।

तगणः तगणः जगणः गुरू
ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ
तत्पातु मातुः प्रणयापराध-

तगणः तगणः जगणः गुरू
ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ
पादाहतैः पूततमं ततो नः।।

अनेन प्रकारेण सर्गेऽस्मिन् असीतितमं श्लोकं याव**दिन्द्रवज्रा**। अन्तिमे श्लोके **शार्दूलविक्रीडितं** नाम छन्दः। तल्लक्षणं यथा वृत्तरत्नाकरे—

**सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्।** (३.१०१)

अस्य प्रत्येकस्मिन् चरणे सूर्यैः द्वादशभिः, अश्वैः सप्तभिश्च यतिः विरामः। तेनैकोनविंशतिवर्णकं प्रतिचरणात्मकं वृत्तमिदम्। अस्य प्रत्येकस्मिन् चरणे मगणः, सगणः, जगणः, सगणः, तगणः, तगणः, ततः गुरुः प्रयुज्यते। लक्षणं घटयन्तु तावत् श्लोकेऽस्मिन्—

मगण. सगणः जगणः सगणः तगणः तगणः गुरुः
ऽ ऽ ऽ । । ऽ । ऽ । । । ऽ ऽ ऽ । ऽ ऽ । ऽ

शब्दा यद्वदनं प्रपद्य मृदुतामाशासतेऽन्यादृशी—

मगणः सगणः जगणः सगणः तगणः तगणः गुरुः

ऽ ऽ । । । ऽ । ऽ । । । ऽ ऽ ऽ । ऽ ऽ । ऽ

मर्था यद्धिषणाप्रवाहपतनादिच्छन्ति जिज्ञास्यताम्।

मगणः सगणः जगणः सगणः तगणः तगणः गुरुः

ऽ ऽ । । । ऽ । ऽ । । । ऽ ऽ ऽ । ऽ ऽ । ऽ

यत्कीर्तिस्पृहया शिवोऽपि निगमान् ग्रन्थाति सर्गादिषु

मगणः सगणः जगणः सगणः तगणः तगणः गुरुः

ऽ ऽ ऽ । । ऽ । ऽ । । । ऽ ऽ ऽ । ऽ ऽ । ऽ

प्राचस्तान् कवितापितामहयदारूढान् कवीन् प्रस्तुमः। (शिव. १.८१)

**द्वितीये सर्गे**ऽप्येकाशीतितमं श्लोकं यावदिन्द्रवज्रा, तदनन्तरमन्तिमे द्व्यशीतितमे श्लोके **शार्दूलविक्रीडितं** नाम छन्दः वर्तते। पूर्ववल्लक्षणं घटनीयं सुधीभिः।

**तृतीये सर्गे** प्रथमश्लोकात् पञ्चाशीतितमश्लोकं यावत् कालभारिणी नाम वृत्तं वर्तते। तल्लक्षणं यथा—

विषमे ससजा यदा गुरू चेत् सभरा येन तु कालभारिणीयम्।

यस्य विषमे (प्रथमे, तृतीये) पादे सगणद्वयं जगणः गुरुद्वयं समे द्वितीये चतुर्थे च चरणे सगणः, भगणः, रगणः, यगणः चेत्, तदा **कालभारिणी** नाम वृत्तं भवति। अर्द्धसमं वृत्तमिदम् ११+२२=२३। अवलोकयन्तु लक्ष्ये—

सगणः सगणः जगणः गुरू

। । ऽ । । ऽ । ऽ । ऽ ऽ

अथ जातु पुरन्दरः सुधर्मा-

सगणः भगणः रगणः यगणः

। । ऽ ऽ । । ऽ । ऽ । ऽ ऽ

मधितिष्ठन् सह सप्तभिर्दिगीशैः।

सगणः सगणः जगणः गुरू

। । ऽ । । ऽ । ऽ । ऽ ऽ

अविजेयमनुक्षणोपचित्या

| सगणः | भगणः | रगणः | यगणः |
| --- | --- | --- | --- |
| । । ऽ | ऽ । । | ऽ । ऽ | । ऽ ऽ |

विमतं वृत्तममन्त्रयद् विजेतुम्।। (३.१)

षडशीतितमे श्लोके **वसन्ततिलका** नाम छन्दः, तल्लक्षणं यथा वृत्तरत्नाकरे—

**उक्ता वसन्ततिलका तभजा जगौ गः ।**

अस्य छन्दसः प्रत्येकस्मिन् चरणे चतुर्दशाक्षराणि भवन्ति।

तत्र तगण-भगण-जगण-जगणगुरुद्वयं च भवन्ति। श्लोके अवलोकन्तु तावत्—

| तगण | भगण | जगण | जगण | गुरू |
| --- | --- | --- | --- | --- |
| ऽ ऽ । | ऽ । । | । ऽ । | । ऽ । | ऽ ऽ |
| वासन्ति | कप्रथमपर्वसु | वासव | | त्व- |

| तगण | भगण | जगण | जगण | गुरू |
| --- | --- | --- | --- | --- |
| ऽ ऽ । | । ऽ । | । ऽ । | । ऽ । | ऽ ऽ |
| मित्थं | समेत्य | सकलैरनुयायिवर्गैः। | | |

अविश्वपारनगराभिमुखात्प्रयाणा-

दभ्यर्च नौ कनकवारिरुहैरमीभिः।। (३।८६)

सप्ताशीतितमे श्लोके **प्रहर्षिणी** नाम छन्दः वर्तते। तल्लक्षणं यथा—

**म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ।**

यस्य प्रत्येकस्मिन् चरणे त्रयोदशवर्णाः, त्रिभिर्दशभिश्च यतिः, मगण-नगण-जगण-रगण-गुरुः भवति, सा प्रहर्षिणी कथ्यते। तत्र श्लोकेऽवलोकयन्तु—

| मगण | नगण | जगण | रगण | गुरुः |
| --- | --- | --- | --- | --- |
| ऽ ऽ ऽ | । । । | । ऽ । | ऽ । ऽ | ऽ |

इत्युक्ते सति जगदादिदम्पतिभ्या-

| मगण | नगण | जगण | रगण | गुरुः |
|---|---|---|---|---|
| ऽ ऽ ऽ | । । । | । ऽ । | ऽ । ऽ | ऽ |

मिन्द्रस्तद्गुरुरितरेऽनुयायिनश्च।
प्रस्थानप्रणतिपरम्पराभिरेता-
वन्योन्याभ्यधिकदयामयौ वितेनुः।। (३.८७)

सर्गस्यान्तिमेऽष्टाशीतितमे श्लोके **शार्दूलविक्रीडितम्** नाम छन्दः। तत्रागुक्तम्।

**चतुर्थे सर्गे** प्रथमतः षडोत्तरशततमं श्लोकं यावद् **अनुष्टुप्** छन्दः। तल्लक्षणं वृत्तरत्नाकरे निगदितम्—

**श्लोके षष्ठं गुरुः ज्ञेयं सर्वत्र लघु पञ्चमम्।**
**द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः।।**

अष्टवर्णात्मकमिदं छन्दः। उदाहरणेनावलोकयन्तु—

निवृत्ते वासवे तस्मिन् निवृत्ते चान्तरे मनोः।
इन्दाञ्चकार कोऽप्यन्यो वृन्दारकनिकेतने।। (४.१)

सप्तोत्तरशततमे श्लोके वसन्ततिलका छन्दः। तल्लक्षणमुक्तं प्राक्।

अष्टोत्तरशततमे श्लोके शार्दूलविक्रीडितं छन्दः। लक्षणं पूर्वमवलोकनीयम्।

**पञ्चमे सर्गे** प्रथमश्लोकतः एकाशीतिश्लोकपर्यन्तं **वंशस्थं** छन्दः। तल्लक्षणं यथा—

**जतौ तु वंशस्थमुदीरितं जरौ।**

द्वादशवर्णात्मके छन्दस्यस्मिन् पादे यतिर्भवति, अथ च जगण-तगण-जगण-रगणैर्वंशस्थमुदीरितं कथितम्। यथा—

| जगणः | तगणः | जगणः | रगणः |
|---|---|---|---|
| । ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ |

स इत्थमाराधितचन्द्रशेखर-

| जगण: | तगण: | जगण: | रगण: |
|---|---|---|---|
| । ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ |

प्रसादसम्पत्परिपाकसम्भृतम्।

| जगण: | तगण: | जगण: | रगण: |
|---|---|---|---|
| । ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ |

कुलावतंसं कुलशेखरो नृप-

| जगण: | तगण: | जगण: | रगण: |
|---|---|---|---|
| । ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ |

श्चिराय लेभे मलयध्वजं सुतम्।। (५।१)

अन्यत्राप्यूह्यम्।

द्व्यशीतितमे श्लोके **वसन्ततिलका** छन्द:। लक्षणन्तु प्रागुदितम्।

**षष्ठे सर्गे** प्रथमश्लोकात् चतुरशीतितमं श्लोकं यावत् **प्रहर्षिणी** छन्द:। तल्लक्षणं प्राक् प्रतिपादितम्।

पञ्चाशीतितमे श्लोके **इन्द्रवज्रा** छन्द:। लक्षणन्तु पूर्वमुटङ्कितम्।

षडशीतितमे श्लोके **पुष्पिताग्रा** नाम वृत्तमस्ति। तल्लक्षणं यथा—
**अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा।**

यस्य वृत्तस्य अयुजि = प्रथमे, तृतीये चरणे नगणद्वयं, रगण:, यगण: तथा युजि द्वितीये चतुर्थे च समे पादे नगण: जगणद्वयं रगण: गुरुश्च वर्ण: स्यात्, तत्पुष्पिताग्रा नाम वृत्तम्। १२+१३ = २५×२= ५० वर्णात्मकमिदं वृत्तम्। लक्ष्यश्लोकेऽवलोकयन्तु तावत्।

| नगण: | नगण: | रगण: | यगण: |
|---|---|---|---|
| । । । | । । । | ऽ । ऽ | । ऽ ऽ |

प्रशिथिलकलुषं प्रशान्तमोहं

| नगण: | जगण: | जगण: | रगण: | गुरु: |
|---|---|---|---|---|
| । । । | । ऽ । | । ऽ । | ऽ । ऽ | ऽ |

प्रमदतरङ्गपरम्पराधिरूढम्।

नगणः नगणः रगणः यगणः
। । । । । । ऽ । ऽ । ऽ ऽ

जगदखिलमभूदभूतपूर्वं

नगणः जगणः जगणः रगणः गुरुः
। । । । ऽ । । ऽ । ऽ । ऽ ऽ

मनुजकुलावतरे जगज्जनन्याः ।। (६.८६)

**सप्तमे सर्गे** प्रथमतः षडशीतितमं श्लोकं यावत्**पुष्पिताग्रा** वृत्तम्। तल्लक्षणं प्रागुदितम्।

सप्ताशीतितमे श्लोके **वसन्ततिलका** वृत्तम्, तदपि पूर्वं प्रतिपादितम्।

**अष्टमे सर्गे** प्रथमतः चतुरशीति पद्यं यावत् **स्वागता** छन्दः। तल्लक्षणं यथा—

**स्वागता रनभगैर्गुरुणा च।**

अर्थाद्यत्र रगणः, नगणः भगणः गुरु, गुरुः च वर्णः भवेत्, तत् स्वागता नाम छन्दः। लक्ष्येऽवलोकयन्तु—

रगणः नगणः भगणः गुरू
ऽ । ऽ । । । ऽ । । ऽ ऽ

जातुचित्तदनु पाण्ड्यकुमारी

रगणः नगणः भगणः गुरू
ऽ । ऽ । । । ऽ । । ऽ ऽ

चित्रिते सदसि रत्नगणेन।

रगणः नगणः भगणः गुरू
ऽ । ऽ । । ऽ ऽ । । ऽ ऽ

दर्शनैरपि च षड्भिरलभ्यं

रगणः नगणः भगणः गुरू
ऽ । ऽ । । ऽ ऽ । । ऽ ऽ

दर्शनं निजमदात् प्रकृतीनाम् ।। (८.१)

पञ्चाशीतिषडशीतितमयोः श्लोकयोः **शार्दूलविक्रीडितं** नाम वृत्तम्। तल्लक्षणन्तु प्राक्प्रतिपादितम्।

**नवमे सर्गे** प्रथमश्लोकात् त्र्यधिकशततमं यावद् **वसन्ततिलका** नाम वृत्तम्। लक्षणं तस्य पूर्वमुक्तम्।

चतुरधिकशततमे श्लोके **नाराचं** नाम वृत्तम्। तल्लक्षणं यथा—

**इह ननरचतुष्कसृष्टन्तु नाराचमाचक्षते।**

अर्थाद् यस्य चतुर्षु चरणेषु प्रत्येकस्मिन् चरणे क्रमेण नगणः, नगणः रगणः रगणः रगणः पुनश्च रगणः भवेत्, तत् **नाराचं** नाम वृत्तमुक्तं विज्ञैः। अवलोकयन्तु लक्ष्ये श्लोके—

| नगणः | नगणः | रगणः | रगणः | रगणः | रगणः |
|---|---|---|---|---|---|
| । । । | । । । | ऽ । ऽ | ऽ । ऽ | ऽ । ऽ | ऽ । ऽ |

प्रतिकरिपरिशङ्कितद्वाहिनीगन्धदन्तावल-

| नगणः | नगणः | रगणः | रगणः | रगणः | रगणः |
|---|---|---|---|---|---|
| । । । | । । । | ऽ । ऽ | ऽ । ऽ | ऽ । ऽ | ऽ । ऽ |

प्रतिहतिशिथिलक्षरज्जम्बुसम्भूतभूरिद्रवा।

| नगणः | नगणः | रगणः | रगणः | रगणः | रगणः |
|---|---|---|---|---|---|
| । । । | । । । | ऽ । ऽ | ऽ । ऽ | ऽ । ऽ | ऽ । ऽ |

सरिदियमभितोऽपि सम्प्लावयन्ती वनं तीरयो-

रकृतकृतनिवेशमस्मिन् बलं हैममेवाखिलम् ।। (९.१०४)

**दशमे सर्गे** एकोत्तरशततमं यावद् **रथोद्धता** नाम वृत्तम्। तल्लक्षणं यथा—

**रात् परैर्नरलगै रथोद्धता।**

यस्य चतुर्षु पादेषु रात् रगणात् परैः परवर्तिभिः नरलगैः नश्च, रश्च लश्च गश्च तैरिति द्वन्द्वः, अर्थात् रगणः, नगणः, रगणः, लघुः, गुरुश्च वर्णः क्रमेण भवेत्, तद् **रथोद्धता** नाम छन्दः। सङ्गमयन्तु तावल्लक्ष्यश्लोके—

| रगणः | नगणः | रगणः | लघुः | गुरुः |
|---|---|---|---|---|
| ऽ । ऽ | । । । | ऽ । ऽ | । | ऽ |

दिक्पतीनथ विजेतुमुत्सुका

| रगणः | नगणः | रगणः | लघुः | गुरुः |
|---|---|---|---|---|
| ऽ । ऽ | । । । | ऽ । ऽ | । | ऽ |

देवशैलशिखराग्रवर्त्तिनः।

| रगणः | नगणः | रगणः | लघुः | गुरुः |
|---|---|---|---|---|
| ऽ । ऽ | । । । | ऽ । ऽ | । | ऽ . |

उत्पपात सह सैनिकैर्द्दिवं

| रगणः | नगणः | रगणः | लघुः | गुरु |
|---|---|---|---|---|
| ऽ । ऽ | । । । | ऽ । ऽ | । | ऽ |

स्यन्दनेन महता तटातका ।। (१०.१)

द्व्यधिकशततमत्र्यधिकशततमयोश्च श्लोकयोः **वसन्ततिलका** नाम वृत्तम्। तत्तु पूर्वं प्रतिपादितम्।

चतुरधिकशततमे श्लोके **कालभारिणी** नाम वृत्तम्। तल्लक्षणं प्राक्प्रतिपादितम्।

पञ्चाधिकशततमे श्लोके **स्वागता** नाम वृत्तम्। लक्षणं प्रतिपादितं प्राक्।

षडधिकशततमसप्ताधिकशततमयोश्च श्लोकयोः **हरिणी** नाम वृत्तम्। तल्लक्षणं यथा—

**नसमरसला गः षड्वेदैर्हयैर्हरिणी मता।**

यस्य प्रत्येकस्मिन् चरणे नगणः, सगणः, मगणः, रगणः, सगणः लघुः गुरुश्च वर्णः स्यात्, तद् **हरिणी** नाम वृत्तम्। अस्मिन् वृत्ते षड्भिः, वेदैश्चतुर्भिः हयैः सप्तभिश्चाक्षरैः यतिः भवति। लक्ष्यं दृष्टिपूतं कुर्वन्तु—

| नगणः | सगणः | मगणः | रगणः | सगणः | लघुः | गुरु |
|---|---|---|---|---|---|---|
| । । । | । । ऽ | ऽ ऽ ऽ | ऽ । ऽ | । । ऽ | । | ऽ |

घटितमखिलं ज्ञातो भावो न किञ्चन शेषितं

| नगणः | सगणः | मगणः | रगणः | सगणः | लघुः | गुरु |
|---|---|---|---|---|---|---|
| । । । | । । ऽ | ऽ ऽ ऽ | ऽ । ऽ | । । ऽ | । | ऽ |

तदपि भवतीं वाचा याचामि काञ्चनमालिकाम्।

इति निगदति स्मेरे शम्भौ रसोत्तरमुत्तरं।

चतुरमवदत् सद्यो तथा क्रियतामिति।। (१०.१०६)

अष्टोत्तरशततमे श्लोके **वसन्ततिलका** नाम वृत्तम्। लक्षणन्तु पूर्वं प्रतिपादितम्।

**एकादशे सर्गे** प्रथमतः षडशीतितमं श्लोकं यावत् **वंशस्थ** नाम वृत्तम्। लक्षणं पूर्वं स्पृष्टम्। सप्ताशीतितमे श्लोके स्रग्धरा नाम वृत्तम्। लक्षणं यथा—

**म्रभ्नैर्याणां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्।**

यस्य चतुर्षु चरणेषु क्रमेण मगणः, रगणः, भगणः, नगणः यगणः, यगणः, यगणश्च भवेत्, त्रिमुनियतियुता वारत्रयं सप्तभिश्च वर्णैः यतिर्भवेत्, तत् **स्रग्धरा** नाम वृत्तम्। लक्ष्ये घटयन्तु लक्षणं तावत्—

| मगणः | रगणः | भगणः | नगणः | यगणः | यगणः | यगणः |
|---|---|---|---|---|---|---|
| ऽ ऽ ऽ | ऽ । ऽ | ऽ । । | । । । | । ऽ ऽ | । ऽ ऽ | । ऽ ऽ |

भेरीभाङ्कारसान्द्रं बहिरबहिरपि प्रौढशुद्धान्तकान्ता

| मगणः | रगणः | भगणः | नगणः | यगणः | यगणः | यगणः |
|---|---|---|---|---|---|---|
| ऽ ऽ ऽ | ऽ । ऽ | ऽ । । | । । । | । ऽ ऽ | । ऽ ऽ | । ऽ ऽ |

पाणिव्याविद्धतूर्यध्वनिजनितचमत्कारसङ्गीतरम्यम्।

जामातृश्लाघनोक्तिव्यतिकरितवधूबान्धवोल्लासहासं

जज्ञे राज्ञो गृहं तन्मुनिजनरचितोत्तुङ्गमङ्गल्यपाठम् ।। (११।८७)

**द्वादशे सर्गे** प्रथमश्लोकाच्चतुर्णवतिश्लोकं यावद् उपजातिः छन्दः। तल्लक्षणं यथा छन्दोमञ्जर्याम्—

**अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः।**

यस्य वृत्तस्य सम्बन्धिनौ पादौ अनन्तरम् = प्रागेव उदीरितयोः इन्द्रवज्रोपेन्द्रवज्रयोः लक्ष्मभाजौ चिह्नयुक्तौ स्याताम्, ताः उपजातयः नामनि वृत्तानि भवन्ति। तत्रेन्द्रवज्रालक्षणं पुनरुच्यते। तद्यथा—

**स्यादिन्द्रवज्रा यदि तौ जगौ गः।**

यस्य चतुर्षु पादेषु तौ तगणः, तगणः, जगौ गः जगणः गुरू च भवेत्, तदा **इन्द्रवज्रा** नाम वृत्तं स्यात्। उपेन्द्रवज्रा यथा—

**उपेन्द्रवज्रा जतजास्ततो गौ।**

यस्य चतुर्षु पादेषु जगणः, तगणः, जगणः ततः = तदनन्तरं गौ = गुरू भवेत्, तदो**पेन्द्रवज्रा** नाम वृत्तं निगदितम्। तयोः मिश्रणेन उपजातयः भवन्ति। सुस्पष्टं लक्षणमुक्तं श्रीमद्वसन्तत्र्यम्बकशेवडेकृतवृत्तमञ्जर्याम्—

**उपेन्द्रवज्राचरणः प्रयाति यत्रेन्द्रवज्राचरणेन योगम्।**
**छन्दोविदस्तामुपजातिमाहुर्भवन्ति भेदा बहवस्तदीयाः ।।**

लक्ष्ये लक्षणं घटयन्तु तावत्—

जगणः तगणः जगणः गुरू
। ऽ । ऽ ऽ । । ऽ । ऽ ऽ
अथासने रत्नमये निषण्ण-

तगणः तगणः जगणः गुरू
ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ
माद्यं युवानं मुनयः पुराणाः।

तगणः तगणः जगणः गुरू
ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ
आशीर्वचोभिर्विविधैरपुष्ण-

तगणः तगणः जगणः गुरू
। ऽ । ऽ ऽ । । ऽ । ऽ ऽ
न्ननाहतातोद्यनिनादमिश्रैः ।। (१२.१)

श्लोकेऽस्मिन् प्रथमचतुर्थचरणयोः उपेन्द्रवज्रा, द्वितीयतृतीययोः इन्द्रवज्रा नामनी छन्दसी विद्येते। तस्मात् **आर्द्रा** नामोपजाति भेदः सम्पद्यते। अन्येष्वपि श्लोकेषूह्यः कार्यः।

पञ्चनवतितमे श्लोके **वसन्ततिलका** नाम छन्दः विद्यते। तल्लक्षणं प्रागुदितम्।

**त्रयोदशे सर्गे** प्रथमतः अष्टाशीतितमं श्लोकं यावत् **शालिनी** नाम वृत्तं विद्यते। तल्लक्षणं यथा छन्दोमञ्जर्याम्—

**मात्तौ गौ चेच्छालिनी वेदलोकैः।**

यस्य प्रत्येकस्मिन् पादे मात्तौ मगणात् परं तश्च तश्च तयोर्द्वन्द्वः, गश्च गश्च गौ गुरू वर्णौ च (मगणः, तगणः, तगणः गुरु गुरुश्च) भवेयुः, तदा शालिनी नाम वृत्तम्। अत्र वेदलोकैः चतुर्भिः सप्तभिश्च वर्णैः यतिर्भवति।

| मगणः | तगणः | तगणः | गुरू |
|---|---|---|---|
| ऽ ऽ ऽ | ऽ ऽ । | ऽ ऽ । | ऽ ऽ |

सम्प्राप्येत्थं पाण्ड्यराज्याभिषेकं

| मगणः | तगणः | जगणः | गुरू |
|---|---|---|---|
| ऽ ऽ ऽ | ऽ ऽ । | ऽ ऽ । | ऽ ऽ |

सार्धं देव्या सुन्दरः पाण्ड्यदेवः।

| मगणः | तगणः | जगणः | गुरू |
|---|---|---|---|
| ऽ ऽ ऽ | ऽ ऽ । | ऽ ऽ । | ऽ ऽ |

आसीमाद्रेर्निर्हृतारातिशल्यां

| मगणः | तगणः | जगणः | गुरू |
|---|---|---|---|
| ऽ ऽ ऽ | ऽ ऽ । | ऽ ऽ । | ऽऽ |

पृथ्वीं रेमे विभ्रदेकातपत्राम् ।। (१३।१)

एकोननवतितमे श्लोके मन्दाक्रान्ता छन्दः। तल्लक्षणं यथा—

**मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्।**

यस्य प्रत्येकस्मिन् चरणे क्रमेण मगणः, भगणः नगणः, तगणः, तगणः, गुरु; तथा गुरुः वर्णः भवेत्, तत् मन्दाक्रान्ता नाम वृत्तम्। अस्मिन् छन्दसि चतुर्भिः, षड्भिश्च वर्णैः यतिर्भवति। लक्ष्ये सङ्गमयन्तु, यथा—

| मगणः | भगणः | नगणः | तगणः | तगणः | गुरू |
|---|---|---|---|---|---|
| ऽ ऽ ऽ | ऽ । । | । । । | ऽ ऽ । | ऽ ऽ । | ऽ ऽ |

क्रन्दद्गन्धद्विपमपसरत्सैन्धवोद्धूतयोध-

| मगणः | भगणः | नगणः | तगणः | तगणः | गुरू |
|---|---|---|---|---|---|
| ऽ ऽ ऽ | ऽ । । | । । । | ऽ ऽ । | ऽ ऽ । | ऽ ऽ |

प्रत्युद्धारव्यसनविमुखापेतपादातजातम्।

| मगणः | भगणः | नगणः | तगणः | तगणः | गुरू |
|---|---|---|---|---|---|
| ऽ ऽ ऽ | ऽ । । | । । । | ऽ ऽ । | ऽ ऽ । | ऽ ऽ |

धावद्देवप्रवरसमरोदन्तयाथार्थ्यबोध-

| मगणः | भगणः | नगणः | तगणः | तगणः | गुरू |
|---|---|---|---|---|---|
| ऽ ऽ ऽ | ऽ । । | । । । | ऽ ऽ । | ऽ ऽ । | ऽ ऽ |

भ्राम्यत्पारं नगरमभवज्जर्जरं निर्जराणाम् ।। (१३.८९)

**चतुर्दशे सर्गे** प्रथमश्लोकाद् एकोननवतितमं श्लोकं यावद् **अनुष्टुप्** छन्दः। तल्लक्षणं प्राक्प्रतिपादितम्।

नवतितमे श्लोके **रुचिरा** नाम छन्दः। तल्लक्षणं यथा—

**जभौ सजौ गिति रुचिरा चतुर्ग्रहैः।**

यस्य प्रत्येकस्मिन् चरणे जभौ सजौ गिति = जगणः, भगणः सगणः, जगणः गुरुश्च वर्णः भवेत् तथा चतुर्ग्रहैः, = चतुर्भिः नवभिश्च वर्णैः यतिः स्यात्, तदा **रुचिरा** नाम वृत्तम्। यथा—

| जगणः | भगणः | सगणः | जगणः | गुरुः |
|---|---|---|---|---|
| । ऽ । | ऽ । । | । । ऽ | । ऽ । | ऽ |

परीक्ष्य तदद्वयमपि शक्रभाषितं

जगणः भगणः सगणः जगणः गुरुः
। ऽ । ऽ । । । । ऽ । ऽ । ऽ

ततः शिवं स्वयमपि तत्र सेवितुम्।

जगणः भगणः सगणः जगणः गुरुः
। ऽ । ऽ । । । । ऽ । ऽ । ऽ

जलग्रहामयमृदितो जलेश्वरः

जगणः भगणः सगणः जगणः गुरुः
। ऽ । ऽ । । । । ऽ । ऽ । ऽ

पुरं निजं पुनरगमत् सविस्मयः ।। (१४.९०)

एकनवतितमे श्लोके **शार्दूलविक्रीडितं** नाम छन्दः। लक्षणं तस्य पूर्वमुपवर्णितम्।

**पञ्चदशे सर्गे** प्रथमश्लोकात् सप्तसप्ततितमं श्लोकं यावत् सुन्दरी नाम छन्दः। तल्लक्षणं छन्दोमञ्जर्याम्—

**अयुजोर्यदि सो जगौ युजोः सभरा ल्गौ यदि सुन्दरी तदा।**

यदि अयुजोः विषमपादयोः सगणद्वयं जगणः गुरुश्च स्यात् युजोः समपादयोः सगणः, भगणः लघुः गुरुः च भवेत्, तदा **सुन्दरी** नामार्द्धसमवृत्तं भवति। १०+१२ = २२। लक्ष्ये दृष्टिनिक्षेपं कुर्वन्तु सुधयः—

सगणः सगणः जगणः गुरुः सगणः भगणः रगणः लघु गुरुः
। । ऽ । । ऽ । ऽ । ऽ । । ऽ ऽ । । ऽ । ऽ । ऽ

सलिलाधिपतिप्रचोदितः सरिदीशो मधुराजिघृक्षया।

सगणः सगणः जगणः गुरुः सगणः भगणः रगणः लघु गुरुः
। । ऽ । । ऽ । ऽ । ऽ ऽ । । । । ऽ ऽ । ऽ । ऽ

ववृधे विजिताऽपि सन् पुरा समये कस्य न सम्भवेद् भ्रमः ।।
(१५.१)

अन्तिमे अष्टाशीतितमे श्लोके हरिणप्लुतं नाम वृत्तम्। तल्लक्षणं यथा—

**रात्सो जौ भरसंयुतौ करिवाणकैर्हरिणप्लुतम्।**

यस्य प्रत्येकस्मिन् चरणे रात् रगणात् परे सगणः, जगणः, जगणः, भगणः रगणश्च स्यात्, तद् **हरिणप्लुतम्**। अस्मिन् करिभिः अष्टाभिः, पञ्चमिः पञ्चभिश्च वर्णैः यतिः भवति। यथा लक्ष्ये—

| रगणः | सगणः | जगणः | जगणः | भगणः | रगणः |
| --- | --- | --- | --- | --- | --- |
| ऽ । ऽ | । । ऽ | । ऽ । | । ऽ । | ऽ । । | ऽ । ऽ |

सप्तमो मलयध्वजस्य स सप्तसप्तिसमद्युति-

| रगणः | सगणः | जगणः | जगणः | भगणः | रगणः |
| --- | --- | --- | --- | --- | --- |
| ऽ । ऽ | । । ऽ | । ऽ । | । ऽ । | ऽ । । | ऽ । ऽ |

र्बिभ्रदङ्गदनिर्विशेषमशेषमेव महीतलम्।

| रगणः | सगणः | जगणः | जगणः | भगणः | रगणः |
| --- | --- | --- | --- | --- | --- |
| ऽ । ऽ | । । ऽ | । ऽ । | । ऽ । | ऽ । । | ऽ । ऽ |

आरराध सभाजनैरतिमानुषैर्मधुरेश्वरं

| रगणः | सगणः | जगणः | जगणः | भगणः | रगणः |
| --- | --- | --- | --- | --- | --- |
| ऽ । ऽ | । । ऽ | । ऽ । | । ऽ । | ऽ । । | ऽ । ऽ |

रञ्जयन् जनताः सुतानिव राजशेखरपार्थिवः।। (१५.८८)

**षोडशे सर्गे** प्रथमश्लोकादष्टाशीतितमं श्लोकं यावद् **वंशस्थं** नाम वृत्तम्। तत्तु प्रतिपादितं प्राक्। एकोननवतितमे श्लोके शार्दूलविक्रीडितम्। तदपि पूर्वमेवाभिहितम्।

**सप्तदशे सर्गे** प्रथमतः पञ्चाशीतितमं श्लोकं यावत् **प्रमिताक्षरा** नाम वृत्तम्। तल्लक्षणं छन्दोमञ्जर्याम्—

**प्रमिताक्षरा सजससैः कथिता।**

यस्य प्रत्येकस्मिन् चरणे सजससैः = सश्च, जश्च सश्च सश्च ते, तैः इति द्वन्द्वः। अर्थात् सगणः जगणः सगणः सगणश्च भवेत्, सा **प्रमिताक्षरा** कथिता। लक्षणन्तु श्लोके घटयन्तु—

सगणः जगणः सगणः सगणः
। । ऽ । ऽ । । । ऽ । ।ऽ

कुलभूषणस्तदनु भूमिपतिः

सगणः जगणः सगणः सगणः
। । ऽ । ऽ । । । ऽ । । ऽ

कुलदैवतस्य मधुराधिपतेः।

सगणः जगणः सगणः सगणः
। । ऽ । ऽ । । । ऽ । । ऽ

चरणं सदा परिचरन्नशिष-

सगणः जगणः सगणः सगणः
। । ऽ । ऽ ऽ । । ऽ । । ऽ

च्चतुरर्णवीवलयितामवनिम्।।

षडशीतितमे श्लोके **स्रग्धरा** नाम वृत्तम्। तल्लक्षणं यथा छन्दोमञ्जर्याम्—

**म्रभ्नैर्याणां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्।**

यस्य प्रत्येकस्मिन् चरणे क्रमेण मगणः, रगणः, भगणः नगणः, यगणत्रयः च भवेत्, तत् **स्रग्धरा** नाम वृत्तम्। अस्मिन् सप्त-सप्त-सप्तभिश्च यतिः भवति। लक्ष्ये पश्यन्तु—

मगणः रगणः भगणः नगणः यगणः यगणः यगणः
ऽ ऽ ऽ ऽ । ऽ ऽ । । । । । । ऽ ऽ । ऽ ऽ। ऽ ऽ

अम्भोभिः केवलैरप्यवनिपतिचमूं तर्पयन् जातु तप्तां

मगणः रगणः भगणः नगणः यगणः यगणः यगणः
ऽ ऽ ऽ ऽ । ऽ ऽ । । । । । । ऽ ऽ । ऽ ऽ। ऽ ऽ

ख्यातिं धत्ते यदीशः कियदिव न यशो नित्यमन्नप्रदायाः।

मगणः रगणः भगणः नगणः यगणः यगणः यगणः

ऽ ऽ ऽ ऽ । ऽ ऽ । । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ

देव्या मीनेक्षणाया इति नगरयुजामद्भुतान् भक्तिवादान्

मगणः रगणः भगणः नगणः यगणः यगणः यगणः

ऽ ऽ ऽ ऽ । ऽ ऽ । । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ

श्रृण्वन् राजेन्द्रपाण्ड्यः सकलमपि महीचक्रमेकः शशास।। (१७.८७)

अष्टाशीतितमैकोननवतितमयोः श्लोकयोः अनुष्टुप् छन्दः। तल्लक्षणं तु पूर्वं प्रतिपादितम्।

**अष्टादशे सर्गे** प्रथमश्लोकादशीतितमश्लोकपर्यन्तं मञ्जुभाषिणी नाम वृत्तमस्ति। तल्लक्षणं यथा छन्दोमञ्जर्याम्—

**सजसा जगौ च यदि मञ्जुभाषिणी।**

यस्य प्रत्येकस्मिन् चरणे सगणः, जगणः सगणः, जगणः गुरुश्च वर्णः भवेत्, तदा **मञ्जुभाषिणी** नाम वृत्तम्।

सगणः जगणः सगणः जगणः गुरुः

। । ऽ । ऽ । । । ऽ । ऽ । ऽ

स हयान् सहस्रमयुतं भटोत्तमान्

सगणः जगणः सगणः जगणः गुरुः

। । ऽ । ऽ । । । ऽ । ऽ । ऽ

करिणः शतं दश महारथानपि।

सगणः जगणः सगणः जगणः गुरुः

। । ऽ । ऽ । । । ऽ । ऽ । ऽ

परिगृह्य सैन्यमुचितं व्ययं चर-

सगणः जगणः सगणः जगणः गुरुः

। । ऽ । ऽ । । । ऽ । ऽ । ऽ

न्नवशिष्टमन्यदखिलं शिवे ददौ ।। (१८.१)

एकाशीतितमे श्लोके **वसन्ततिलका** नाम वृत्तम्। तल्लक्षणं पूर्वं प्रतिपादितम्।

**एकोनविंशे सर्गे** प्रथमश्लोकादेवाशीतितमं श्लोकं यावद् **रुचिरा** नाम वृत्तम्। तल्लक्षणं यथा छन्दोमञ्जर्याम्—

**जभौ सजौ गिति रुचिरा चतुर्ग्रहैः।**

यस्यं प्रत्येकस्मिन् चरणे जगणः, भगणः, सगणः, जगणः, गुरुश्च वर्णः भवेत्, तथा चतुर्ग्रहैः चतुर्भिः, नवभिः वर्णैः यतिः स्यात्, तदा **रुचिरा** नाम वृत्तम्। लक्ष्ये अवलोकयन्तु—

| जगणः | भगणः | सगणः | जगणः | गुरुः |
|---|---|---|---|---|
| I S I | S I I | I I S | I S I | S |

तनूभवे वहति ततो वसुन्धरां

| जगणः | भगणः | सगणः | जगणः | गुरुः |
|---|---|---|---|---|
| I S I | S I I | I I S | I S I | S |

चिरादसौ नृपतिरुपेत्य विश्रमम्।

| जगणः | भगणः | सगणः | जगणः | गुरुः |
|---|---|---|---|---|
| I S I | S I I | I I S | I S I | S |

वनेचरैः सह मृगयाकुतूहली

| जगणः | भगणः | सगणः | जगणः | गुरुः |
|---|---|---|---|---|
| I S I | S I I | I I S | I S I | S |

वनं वनं व्यचरदधिज्यकार्मुकः ।।

द्व्यशीतितमे श्लोके **वसन्ततिलका** नाम वृत्तम्। लक्षणं पूर्वं प्रतिपादितम्।

त्र्यसीतितमात् श्लोकात् सप्ताशीतितमं श्लोकं **यावदुपजाति** नाम वृत्तम्। तदपि पूर्वमभिहितम्।

**विंशे सर्गे** 'नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते' इति साहित्यदर्पणमार्गमुररीकृत्य नैकविधानां वृत्तानां प्रयोगो विहितः। तत्र प्रथमश्लोकात् पञ्चमं यावद् **द्रुतविलम्बितं** नाम वृत्तम्। तल्लक्षणं यथा—

**द्रुतविलम्बितमाह नभौ भरौ।**

यस्य प्रत्येकस्मिन् पादे नभौ नश्च भश्च तयोर्द्वन्द्वः, भरौ भश्च रश्च तयोर्द्वन्द्वः, अर्थात् नगणः भगणः, भगणः, रगणश्च भवेत्, तद् **द्रुतविलम्बितं** नाम वृत्तम्। लक्ष्ये यथा—

नगणः भगणः भगणः रगणः
। । । ऽ । । ऽ । । ऽ । ऽ
कपिलकीरमुखाः कवयस्ततः

नगणः भगणः भगणः रगणः
। । । ऽ । । ऽ । । ऽ । ऽ
कतिचिदासत ताम्रनदीतटे।

नगणः भगणः भगणः रगणः
। । । ऽ । । ऽ । । ऽ । ऽ
द्रुहिणशापवशाज्जननी गिरा-

नगणः भगणः भगणः रगणः
। । । ऽ । । ऽ । । ऽ । ऽ
मवततार पुरा हि यदात्मना।। (२०.१)

षष्ठश्लोकात् सप्तदशं श्लोकं यावत् पूर्वप्रतिपादित**मनुष्टुप्** वृत्तम्।

अष्टादशे श्लोके **शिखरिणी** नाम वृत्तम्। तल्लक्षणं यथा छन्दोमञ्जर्याम्—

**रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी।**

यस्य प्रत्येकस्मिन् चरणे यमनसभला गः = यगणः, मगणः, नगणः, सगणः, भगणः, लघुः गुरुश्च वर्णः स्यात्, तत् **शिखरिणी** नाम वृत्तम्।

अस्मिन् छन्दसि रसै रुद्रैश्च षड्भिः, एकादशभिः, च वर्णैः यतिः भवति। लक्ष्ये यथा—

| यगणः | मगणः | नगणः | सगणः | भगणः | ल. | गु. |
|---|---|---|---|---|---|---|
| । ऽ ऽ | ऽ ऽ ऽ | । । । | । । ऽ | ऽ । । | । | ऽ |

अहो भावव्यक्तेः परिणतिरहो गूढरस इ

| यगणः | मगणः | नगणः | सगणः | भगणः | ल. | गु. |
|---|---|---|---|---|---|---|
| । ऽ ऽ | ऽ ऽ ऽ | । । । | । । ऽ | ऽ । । | । | ऽ |

त्यलीकव्यामीलन्नयनविगलद्बाष्पसलिलैः।

| यगणः | मगणः | नगणः | सगणः | भगणः | ल. | गु. |
|---|---|---|---|---|---|---|
| । ऽ ऽ | ऽ ऽ ऽ | । । । | । । ऽ | ऽ । । | । | ऽ |

उदञ्चद्रोमाञ्चैरुदरलुलितामैरिव मुहुः

| यगणः | मगणः | नगणः | सगणः | भगणः | ल. | गु. |
|---|---|---|---|---|---|---|
| । ऽ ऽ | ऽ ऽ ऽ | । । । | । । ऽ | ऽ । । | । | ऽ |

कथं व्याप्ता भूमिः कविभिरपटुज्ञानपशुभिः ।।(२०.१८)

एकोनविंशे श्लोके **मालिनी** नाम वृत्तम्। तल्लक्षणं यथा छन्दोमञ्जर्य्याम्—

**ननमयययुतेयं मालिनी भोगिलोकैः।**

यस्य प्रत्येकस्मिन् चरणे ननमयययुता नगणः, नगणः, मगणः यगणः, यगणः तथा भोगिलोकैः अष्टभिः सप्तभिश्च वर्णैः यतिः भवेत्, तत् **मालिनी** नाम वृत्तम्। यथा लक्ष्ये—

| नगणः | नगणः | मगणः | यगणः | यगणः |
|---|---|---|---|---|
| । । । | । । । | ऽ ऽ ऽ | । ऽ ऽ | । ऽ ऽ |

इति निगदितमेवाभीक्ष्णमावर्त्तयद्भिः

| नगणः | नगणः | मगणः | यगणः | यगणः |
|---|---|---|---|---|
| । । । | । । । | ऽ ऽ ऽ | । ऽ ऽ | । ऽ ऽ |

प्रतिकथकवचांसि क्वाप्यनाकर्णयद्भिः।

| नगणः | नगणः | मगणः | यगणः | यगणः |
|---|---|---|---|---|
| । । । | । । । | ऽ ऽ ऽ | । ऽ ऽ | । ऽ ऽ |

अयथचिरविनीतैर्वालिशैरात्तगन्धाः

| नगणः | नगणः | मगणः | यगणः | यगणः |
|---|---|---|---|---|
| । । । | । । । | ऽ ऽ ऽ | । ऽ ऽ | । ऽ ऽ |

शरणमभिसमीयुश्चन्द्रचूडं कवीन्द्राः ।। (२०.१९)

विंशे श्लोके **स्रग्धरा** नाम वृत्तम्। तल्लक्षणं पूर्वं प्रतिपादितम्।

एकविंशे श्लोके **उपजातिः** नाम वृत्तम्। तत्तु पूर्वं प्रतिपादितम्।

द्वाविंशे श्लोके **शार्दूलविक्रीडितं** नाम वृत्तम्। तस्याभिधानं पूर्वं कृतम्।

त्रयोविंशे श्लोके **सुन्दरी** नाम वृत्तम्। तत्तु पूर्वं कथितम्।

चतुर्विंशे श्लोके **वसन्ततिलका** नाम छन्दः। तदपि पूर्वं विवृतम्।

पञ्चविंशे श्लोके **शालिनी** नाम वृत्तम्। तल्लक्षणं यथा छन्दोमञ्जर्य्याम्—

**मात्तौ गो चेच्छालिनी वेदलोकैः।**

यस्य प्रत्येकस्मिन् चरणे मात्तौ मगणात् परं तश्च तश्च तौ = तगणद्वयं गश्च गश्च गौ गुरू वर्णौ च, अर्थात् मगणः तगणः तगणः गुरुः, गुरुः च स्यात्, तत् **शालिनी** नाम वृत्तम्। अत्र वेदलोकैः चतुर्भिः सप्तभिश्च वर्णैः यतिः भवति। लक्ष्ये दृष्टिपातं विधेयम्—

| मगणः | तगणः | तगणः | गुरू |
|---|---|---|---|
| ऽ ऽ ऽ | ऽ ऽ । | ऽ ऽ । | ऽ ऽ |

अध्यारूढाः पीठमीशादवाप्तं

| मगणः | तगणः | तगणः | गुरू |
|---|---|---|---|
| ऽ ऽ ऽ | ऽ ऽ । | ऽ ऽ । | ऽ ऽ |

दुर्दर्शं तद् दुर्धियां दूरतोऽपि।

| मगणः | तगणः | तगणः | गुरू |
|---|---|---|---|
| ऽ ऽ ऽ | ऽ ऽ । | ऽ ऽ । | ऽ ऽ |

अष्टाचत्वारिंशदाद्याः कवीन्द्रा-

| मगणः | तगणः | तगणः | गुरू |
|---|---|---|---|
| ऽ ऽ ऽ | ऽ ऽ । | ऽ ऽ । | ऽ ऽ |

श्चक्रुर्भक्तिं भूयसीं चन्द्रचूडे ।। (२०.२५)

षड्विंशे श्लोके **अनुष्टुप्** छन्दः। लक्षणन्तु प्राक् प्रतिपादितम्।

सप्तविंशे श्लोके **द्रुतविलम्बितं** नाम वृत्तम्। तत्तु पूर्वं कथितम्।

अष्टाविंशतितमाच्चत्वारिंशं श्लोकं याव**दुपजातिः** छन्दः। तत्तु पूर्वं विवेचितम्।

एकचत्वारिंशे श्लोके **शिखरिणी** नाम वृत्तम्। द्विचत्वारिंशे अनुष्टुप् छन्दः। त्रयश्चत्वारिंशे श्लोके **वंशस्थं** नाम वृत्तम्। चतुश्चत्वारिंश-पञ्चचत्वारिंशयोश्च **वसन्ततिलका** वृत्तम्। षड्चत्वारिंशात् त्रिपञ्चाशं श्लोकं यावद् **आर्या** नाम मात्रावृत्तम्। अस्य नव भेदा उक्ताः। यथा—

**पथ्याविपुला चपला मुखचपला जघनचपला च।**

**गीत्युपगीत्युद्गीतय आर्यागीतिश्च नवधाऽऽर्या।।**

तेषां लक्षणं यथास्थानमूह्यम्।

चतुष्पञ्चाशत्तमे श्लोके **द्रुतविलम्बितं** नाम वृत्तम्।

पञ्चपञ्चाशत्तमे **शिखरिणी** नाम वृत्तम्।

षट्पञ्चाशत्तमात् अष्टपञ्चाशत्तमं **यावदार्या** वृत्तम्।

एकोनषष्टितमे श्लोके **मन्दाक्रान्ता** नाम वृत्तम्।

षष्टितमे श्लोके **आर्या**।

एकषष्टितमे श्लोके **मन्दाक्रान्ता**।

द्वाषष्टितमात् पञ्चषष्टितमं यावद् **उपजातिः**।

षट्षष्टितमे श्लोके **वसन्ततिलका**।

सप्तषष्टितमाष्टषष्टितमयो**रुपजातिः** नाम वृत्तम्। एकोनसप्ततितमादेकसप्ततितमं यावद् **अनुष्टुप्** वृत्तम्। द्वासप्ततितमे श्लोके **मालिनी** नाम वृत्तम्। तल्लक्षणं यथा—

**ननमयययुतेयं मालिनी भोगिलोकैः।**

यस्य प्रत्येकस्मिन् चरणे नगणः, नगणः, मगणः, यगणः, यगणः, तथा भोगिलोकैः अष्टभिः सप्तभिश्च वर्णैः यतिः भवेत्, तत् **मालिनी** नाम वृत्तम्।

| नगणः | नगणः | मगणः | यगणः | यगणः |
|---|---|---|---|---|
| । । । | । । । | ऽ ऽ ऽ | । ऽ ऽ | । ऽ ऽ |

तदनु तमुपगम्य श्रावयन्तः स्वसूक्तीः

| नगणः | नगणः | मगणः | यगणः | यगणः |
|---|---|---|---|---|
| । । । | । । । | ऽ ऽ ऽ | । ऽ ऽ | । ऽ ऽ |

पृथगुपचितवाष्पाः कण्टकोद्भेदरम्याः।

| नगणः | नगणः | मगणः | यगणः | यगणः |
|---|---|---|---|---|
| । । । | । । । | ऽ ऽ ऽ | । ऽ ऽ | । ऽ ऽ |

कपिलभरणकीरैः कल्पिता एव वृत्तीः

| नगणः | नगणः | मगणः | यगणः | यगणः |
|---|---|---|---|---|
| । । । | । । । | ऽ ऽ ऽ | । ऽ ऽ | । ऽ ऽ |

परिजगृहुरथान्यास्तत्यजुर्दूरतस्ते।। (२०.६२)

त्रयःसप्ततितमे श्लोके **उपजातिः** नाम वृत्तम्।

चतुःसप्ततितमे **आर्या**।

पञ्चसप्ततितमे **अनुष्टुप्**।

षट्सप्ततितमे श्लोके **हरिणी** नाम वृत्तम्। तल्लक्षणं यथा—

**नसमरसला गः षड्वेदैर्हयैर्हरिणी मता।**

यस्य चतुर्षु चरणेषु नगणः, सगणः, मगणः, रगणः, सगणः, लघुः, गुरुश्च वर्णः भवेत्, तत् **हरिणी** नाम वृत्तम्।

अस्मिन् षड्भिः, चतुर्भिः, सप्तभिश्चाक्षरैः यतिः भवति। लक्ष्येऽवलोकयन्तु—

| नगणः | सगणः | मगणः | रगणः | सगणः | ल. | गु. |
|---|---|---|---|---|---|---|
| । । । | । । ऽ | ऽ ऽ ऽ | ऽ । ऽ | । । ऽ | । | ऽ |

क्षितिपतिरथेशानं जानन् रुषा परिनिर्गतं

| नगणः | सगणः | मगणः | रगणः | सगणः | ल. | गु. |
|---|---|---|---|---|---|---|
| । । । | । । ऽ | ऽ । । | ऽ | ऽ । | ऽ । | ऽ |

कविकुलमशेषं कविभिः सह शङ्करः।

| नगणः | सगणः | मगणः | रगणः | सगणः | ल. | गु. |
|---|---|---|---|---|---|---|
| । । । | । । ऽ | ऽ ऽ ऽ | ऽ । ऽ | । । ऽ | । | ऽ |

प्रतिनवसुधाधारासारास्पदैर्वचनः स्तुवन्

| नगणः | सगणः | मगणः | रगणः | सगणः | ल. | गु. |
|---|---|---|---|---|---|---|
| । । । | । । ऽ | ऽ ऽ ऽ | ऽ । ऽ | । । ऽ | । | ऽ |

गनगरमनयद् भूयः श्रेयस्करं जगतां हरम् ।। (२०.७६)

द्वितीये पादे छन्दोविच्युतिः।

सप्तसप्ततितमे श्लोके **इन्द्रवज्रा** नाम वृत्तम्।

अष्टासप्ततितमे **वंशस्थः**।

नवसप्ततितमे **पृथ्वी** नाम वृत्तम्। तल्लक्षणं यथा छन्दोमञ्जर्याम्—

**जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः।**

यस्य प्रत्येकस्मिन् चरणे जगणः, सगणः जगणः, सगणः, यगणः, लघुस्तथा गुरुः वर्णः भवेत्, तत् पृथ्वी नाम वृत्तम्। अस्मिन् वसुग्रहयतिः अष्टभिः वर्णैः यतिर्भवति।

| जगणः | सगणः | जगणः | सगणः | यगणः | ल. | गु. |
|---|---|---|---|---|---|---|
| । ऽ । | । । ऽ | । ऽ । | । । ऽ | । ऽ ऽ | । | ऽ |

अदृष्टचरमद्भुतं वपुरमुष्य पश्यन्नपि

| जगणः | सगणः | जगणः | सगणः | यगणः | ल. | गु. |
|---|---|---|---|---|---|---|
| । ऽ । | । । ऽ | । ऽ । | । । ऽ | । ऽ ऽ | । | ऽ |

प्रभावमवधारयन्नपि ततः स्फुटं धीवरः।
परीक्षितुममुं पुनर्जलधिगर्भसञ्चारिणं
मया समुपदर्शितं मकरमाहरेत्यादिशत्।। (२०.७९)

अशीतितमे श्लोके **इन्द्रवज्रा** नाम वृत्तम्।

एकाशीतितमे **शिखरिणी**।

द्व्यशीतितमे **अनुष्टप्**।

त्र्यशीतितमे **इन्द्रवज्रा**।

चतुरशीतिपञ्चाशीतितमयोरनुष्टुप् नाम वृत्तम्।

षडशीतितमे श्लोके **पञ्चचामरं** नाम वृत्तम्। तल्लक्षणमुक्तं छन्दोमञ्जर्य्याम्—

**लघुर्गुरुर्वदन्ति पञ्चचामरम्।**

द्वादशवर्णात्मकं वृत्तमिदम्। अस्मिन् क्रमेण लघुः गुरुः वर्णाः भवन्ति अनेन प्रकारेण जगणः, रगणः, लघुः गुरुः, जगणः, रगणः लघुः गुरुः भवति। यथा लक्ष्ये—

| जगणः | रगणः | ल. | गु. | जगणः | रगणः | ल. | गु. |
|---|---|---|---|---|---|---|---|
| । ऽ । | ऽ । ऽ | । | ऽ | । ऽ। | ऽ । ऽ | । | ऽ |

समुत्सृजन् स मत्स्यतां ननन्द नन्दिकेश्वरः।

| जगणः | रगणः | ल. | गु | जगणः | रगणः | ल. | गु. |
|---|---|---|---|---|---|---|---|
| ।ऽ। | ऽ।ऽ | । | ऽ | ।ऽ। | ऽ।ऽ | । | ऽ |

स धीवरश्च भूतले सुधीवरत्वमागतः।

विमानमागमप्य तां समागते पुरं शिवे

तदा तदाशये मुदं ददाश दाशकन्यका ।। (२०.८६)

**एकविंशे सर्गे** प्रथमात् श्लोकात् षड्विंशं याव**दुपजातिः** नाम वृत्तम्। तत्तु पूर्वं प्रतिपादितम्।

सप्तविंशात् सप्तत्रिंशं श्लोकं यावद् **वसन्ततिलका**।

अष्टात्रिंशे श्लोके **द्रुतविलम्बितम्**।

उनचत्वारिंशे श्लोके **अनुष्टुप्**।

चत्वारिंशे श्लोके **द्रुतविलम्बितं** नाम वृत्तम्।

एकचत्वारिंशे **शिखरिणी**।

द्विचत्वारिंशे श्लोके **द्रुतविलम्बितम्**।

त्रयश्चत्वारिंशे श्लोके **शिखरिणी**।

चतुश्चत्वारिंशे पद्ये **रथोद्धता** नाम वृत्तम्। तल्लक्षणं छन्दोमञ्जर्य्याम्—

**रात् परैर्नरलगौ रथोद्धता।**

यस्य प्रत्येकस्मिन् चरणे रगणात् परैः नगणः रगणः, लघुः गुरुश्च वर्णः स्यात्, तद् **रथोद्धता** नाम वृत्तम्। लक्ष्ये यथा—

| रगणः | नगणः | रगणः | ल. | गु. |
|---|---|---|---|---|
| ऽ।ऽ | ।।। | ऽ।ऽ | । | ऽ |

तत्रे कञ्चिदतिचित्रतेजसं

सादिनं प्रपतनप्रसादिनम्।

पश्यति स्म बहुमानविस्मयस्मेरदृष्टिररिमर्दनो नृपः ।। (२१.४४)

पञ्चचत्वारिंशात् श्लोकादशीतितमं यावद् **उपजातिः** वृत्तम्।

एकाशीतितमादेकनवतितमं श्लोकं यावत् **शार्दूलविक्रीडितं** नाम वृत्तम्।

द्वानवतितमे **इन्द्रवज्रा** नाम वृत्तम्।

त्रयोनवतितमे **शार्दूलविक्रीडितम्।**

चतुर्नवतितमे **वसन्ततिलका।**

पञ्चनवतिषण्णवतितमयोः **आर्या** नाम वृत्तम्।

सप्तनवतितमे **मन्दाक्रान्ता।**

अष्टानवतिनवनवतितमयोः **शार्दूलविक्रीडितम्।**

शततमे श्लोके **आर्या।**

एकाधिकशततमे **शार्दूलविक्रीडितम्।**

द्व्यधिकशततमे **इन्द्रवज्रा** छन्दः।

त्र्यधिकशततमे **उपजातिः** नाम वृत्तम्।

चतुरधिकशततमे **वसन्ततिलका** नाम वृत्तम्।

**द्वाविंशे सर्गे** प्रथमश्लोकात् चतुर्नवतितमं यावद**उपजातिः** नाम वृत्तम्।

पञ्चनवतितमे श्लोके **शार्दूलविक्रीडितम्।**

षण्णवतिसप्तनवतितमयोः श्लोकयोः **इन्द्रवज्रा** नाम वृत्तम्।

अष्टानवतितमे पद्ये **प्रहर्षिणी** नाम वृत्तम्। तल्लक्षणं छन्दोमञ्जर्य्याम्—

**त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्।**

यस्य प्रत्येकस्मिन् चरये मगणः, नगणः, जगणः, रगणः, गुरुश्च भवेत्, तथा त्र्याशाभिः त्रिभिः दशभिश्च वर्णैः यतिः स्यात्सेयं **प्रहर्षिणी** निगदिता। लक्ष्ये दर्शनीयम्—

| मगणः | नगणः | जगणः | रगणः | गुरुः |
|---|---|---|---|---|
| ऽ ऽ ऽ | । । । | । ऽ । | ऽ । ऽ | ऽ |

मा भूवन् नव च रसा कविप्रणीता

| मगण: | नगण: | जगण: | रगण: | गुरु: |
|---|---|---|---|---|
| ऽ ऽ ऽ | । । । | । ऽ । | ऽ । ऽ | ऽ |

काव्येऽस्मिन् पदकमलार्पिते पुरारे:।

आस्ते तु ध्रुवमखिलाभिनन्दनीयां कारुण्यामृतरसकन्दली जनन्या:।।

(२२.९८)

उनशततमे श्लोके **शार्दूलविक्रीडितस्य** क्रीडनं वर्तते। शिवलीलार्णव-महाकाव्यस्य पूर्णाहुति: **सुन्दरी** नाम्ना छन्दसा करोति महाकवि: श्रीनीलकण्ठदीक्षित:। तस्य लक्षणं छन्दोमञ्जर्य्याम्—

**अयुजोर्यदि सो जगौ युजो: सभरा ल्गौ यदि सुन्दरी तदा।**

यदि विषमपादयो: सगणद्वयं जगण: गुरुश्च स्यात्। समपादयो: सगण:, भगण:, रगण:, लघु: गुरुश्च भवेत्, तत् **सुन्दरी** नाम छन्द:। १०+११=२१। यथा लक्ष्ये—

| सगण: | सगण: | जगण: | गुरु: |
|---|---|---|---|
| । । ऽ | । । ऽ | । ऽ । | ऽ |

मलयध्वजपाण्ड्यकन्यका-

| सगण: | भगण: | रगण: | ल. | गुरु: |
|---|---|---|---|---|
| । । ऽ | ऽ । । | ऽ । ऽ | । | ऽ |

चरणद्वन्द्वनिवेशितात्मना।

| सगण: | सगण: | जगण: | गुरु: |
|---|---|---|---|
| । । ऽ | । । ऽ | । ऽ । | ऽ |

शिवियो: कविनेदमर्पितं

| सगण: | भगण: | रगण: | ल. | गुरु: |
|---|---|---|---|---|
| । । ऽ | ऽ । । | ऽ । ऽ | । | ऽ |

शिवलीलार्णवकाव्यमद्भुतम्।। (२२.१००)

प्रकारेणानेन महाकविभि: श्रीनीलकण्ठदीक्षितै: छन्दसां प्रयोग: कृत:। निम्नतालिकया लक्षणादिकमवलोकयन्तु वृत्तपथपथिका: सुधय:।

# शिवलीलार्णवस्य वृत्तरत्नवीथिका

| क्र.सं. | वृत्तनाम | लक्षणम् | प्रयुक्तसंख्या |
|---|---|---|---|
| १. | अनुष्टुप् | श्लोके षष्ठं गुरुः ज्ञेयं सर्वत्र लघुपञ्चमम्।<br>द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः।। | २१९ |
| २. | आर्या | लक्ष्मै तत् सप्त गणा गोपेता भवति नेह विषमे जः ।<br>षष्ठो जश्च नलघु वा प्रथमेऽर्धे नियतमार्यायाः ।। | १६ |
| ३. | इन्द्रवज्रा | स्यादिन्द्रवज्रा यदि तौ जगौ गः। | १६९ |
| ४. | उपजातिः | अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः। | २७७ |
| ५. | उपेन्द्रवज्रा | उपेन्दवज्रा प्रथमे लघौ सा। | |
| ६. | कालभारिणी | विषमे ससजा यदा गुरू चेत्<br>सभरा येन तु कालभारिणीयम्। | ८६ |
| ७. | द्रुतविलम्बितम् | द्रुतविलम्बितमाह नभौ भरौ। | १० |
| ८. | नाराचः | इह ननरचतुष्कसृष्टन्तु नाराचमाचक्षते। | १ |
| ९. | पञ्चचामरः | लघुर्गुरुर्वदन्ति पञ्चचामरम्। | १ |
| १०. | पुष्पिताग्रा | अयुजि नयुगरेफतो यकारो<br>युजि च नजौ जरगाश्च पुष्पिताग्राः । | ८७ |
| ११. | पृथ्वी | जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः। | १ |
| १२. | प्रमिताक्षरा | प्रमिताक्षरा स ज स सैः कथिता। | ८५ |
| १३. | प्रहर्षिणी | त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्। | ८६ |
| १४. | मञ्जुभाषिणी | सजसा जगौ च यदि मञ्जुभाषिणी। | ८० |
| १५. | मन्दाक्रान्ता | मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्। | ६ |
| १६. | मालिनी | ननमयययुतेयं मालिनी भोगिलोकैः। | २ |
| १७. | रथोद्धता | रात् परैर्नरलगै रथोद्धता। | १०२ |
| १८. | रुचिरा | जभौ सजौ गिति रुचिरा चतुर्ग्रहैः। | ८२ |
| १९. | वंथस्थम् | वदन्ति वंशस्थविलं जतौ जरौ। | २५७ |
| २०. | वसन्ततिलका | ज्ञेयं वसन्ततिलकं तभजा जगौ गः। | १३५ |

| | | | |
|---|---|---|---|
| २१. | शार्दूलविक्री-डितम् | सूर्याश्वैर्यदि मः सजौ सततगा शार्दूलविक्रीडितम्। | २६ |
| २२. | शालिनी | मात्तौ गौ चेच्छालिनी वेदलोकैः। | ८९ |
| २३. | शिखरिणी | रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी। | ६ |
| २४. | सुन्दरी | अयुजोर्यदि सो जगौ युजीः सभराल्गौ यदि सुन्दरी तदा। | ८९ |
| २५. | स्रग्धरा | म्रभ्नैर्याणां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्। | १ |
| २६. | स्वागता | स्वागता रनभगैर्गुरुणा च। | ८५ |
| २७. | हरिणप्लुतम् | मात्सो जौ भरसंयुतौ करिवाणकैर्हरिणप्लुतम्। | १ |
| २८. | हरिणी | नसमरसलागः षड्वेदैर्हयैर्हरिणी मता। | ३ |
| | | योगः | २००० |

# परिशिष्टम्-४

# श्लोकानुक्रमरत्नकोशः